# प्राचीन भारतस्य भव्यता तथा तेजस्विता चन्दमामाया




## चन्दमामा

चन्दमामायाः लोकप्रियतायाः एकमात्रं प्रमाणं यत् प्रतिमासम् अस्याः पाठकाः १,२०,००,६०० बालकाः सन्ति ।

चन्दमामायाः प्रसारसंख्या सामान्यतः ८,००,००० अस्ति या प्रतिमासं भारतस्य तथा पूर्वेशियादेशाणां कुटुम्बान्, पाठशालाः तथा पुस्तकालयान् च प्राप्नोति ।

प्रत्येकमासस्य कथासु दर्शितम् अस्ति। भारतस्य सर्वाधिक प्रचारिता बालानां मासिकी

చందమామ चन्दमामा

## वयं कृतज्ञाः स्मः

प्रत्यक्ष-परोक्ष रूपेण च साहाय्यं दत्वा अस्माकम् इमां साहसप्रवृत्तिं सफलतां नीतवन्तः तेषां सर्वेषां कृते वयं कृतज्ञाः स्मः ।

स्वेषाम् अमूल्यसन्देशान् सम्प्रेष्य ये च अस्मान् स्व आशीर्भिः वर्धितवन्तः तेषाम् अपि उपकारं वयं सर्वदा स्मरामः ।

**प्रकाशकः**

संस्कृत विभागः

हिन्दु सेवा प्रतिष्ठानम्

७३/२ 'अक्षरम्' [illegible]मार्गः

शङ्करपुरम्, बेङ्गलूरु-५६०००४



চাঁদমামা CHANDAMAMA चांदोबा



राष्ट्रपति
भारत गणतंत्र
**PRESIDENT**
**REPUBLIC OF INDIA**



## श्रीमता जेलसिंह महोदयेन प्रेषिता वार्ता

March 20, 1984.

It gives me pleasure to know that Chandamama Publications are going to bring a monthly childrens' magazine in Sanskrit.

Chandamama publications are already bringing out magazines for children in almost all Indian languages including English. Sanskrit, with its great literary tradition, can provide inspiration to other languages and help in their enrichment. I hope that the new Sanskrit monthly magazine for children by Chandamama Publications, will be popular and welcomed by all, with equal enthusiasm.

Zail Singh
(ZAIL SINGH)



श्रीमत्या इन्दिरागान्धी महाभागया प्रेषिता वार्ता।

सं. सन्देशः




PRIME MINISTER
INDIA

MESSAGE

Sanskrit is the eternal spring of our culture and the mother of most of our regional languages. More young people should be acquainted with its riches.

My good wishes to the Sanskrit edition of "Chandamama".

(Indira Gandhi)

New Delhi
March 15, 1984



श्रीमता बलराम्जाखर् महोदयेन प्रेषिता ~~वार्ता~~
तः सन्देशः

**DR. BAL RAM JAKHAR**
**SPEAKER, LOK SABHA**



NEW DELHI

Dated : 14-3-1984

## MESSAGE

I am glad to know that Chandamama Publications are publishing Chandamama magazine in 12 languages so as to educate the people about our cultural heritage. I hope that they will publish material which is factual and authentic so that the younger generation is properly educated.

It is also heartening to know that they are bringing out a Sanskrit version of the magazine. This is laudable.

I send my best wishes for success in their venture.

(BAL RAM JAKHAR)

# चन्दमामा

संस्थापकः : चक्रपाणी

सञ्चालकः : नागिरेड्डी

"**चन्दमामा**" अहम् इतःपरं प्रतिमासं संस्कृतभाषया अपि प्रकाशिता भवामि। प्रत्येकभाषायाः सरलं कठिनं च इति मुखद्वयम्। अत्र कथाः सरल-संस्कृत-भाषया एव भवन्ति। छात्राः अपि उत्साहेन पठन्तु, अर्थम् अपि जानन्तु इति मम दृष्टिः। अतः अत्र प्रसिद्धाः शब्दाः एव प्रयुक्ताः, सन्धिः दीर्घसमासः- दूरान्वयः इत्यादयः न कृताः। तथा च युष्मच्छब्दस्य स्थाने भवच्छब्दः प्रयुक्तः।

'चन्दमामा' इति मम नाम भारतदेशे सर्वत्र प्रसिद्धं रूढं च। संस्कृते अपि मम नाम्नः अर्थं शृण्वन्तु—चन्दस्य मा चन्दमा। चन्दमां माति इति चन्दमामा। चन्दः=चन्द्रः। मा=श्रीः। माति=तोलयति। चन्द्रकान्तिसदृशी इत्यर्थः।

सम्पुटः १ अप्रिल् १९८४ सञ्चिका १

एका प्रतिकृतिः रू. २-०० वार्षिकग्राहकशुल्कम् रू. २४-००





## नौका वाचं शृणोति

जपान्‌देशे "किनोकावामारू" नाम नौका निर्मिता । नाविकः 'गच्छतु' इत्युक्ते सा नौका अग्रे चलति, 'तिष्ठतु' इत्युक्ते तिष्ठति । ईदृशी नौका प्रपञ्चे एव प्रथमा, अत्र वाचा नियन्त्रयितुं शक्यं यन्त्रम् आयोजितम् । नाविकस्य आज्ञां श्रुत्वा यन्त्रं चालयितुम् अन्तः तन्त्रज्ञः स्यात् इति मा भावयन्तु । तन्त्रज्ञस्य स्थाने मस्तिष्कयन्त्रं योजितम् अस्ति ।

## सौरशक्त्या विद्युच्छक्तिः

'कालिफोर्निया' नगरे 'सोलार् ओन्' नाम प्रयोगशाला अस्ति । पर्वताकाराः पञ्चदशसहस्राणि दर्पणाः तथा स्थाप्यन्ते यथा तद्द्वारा सूर्यरश्मयः मरुभूमेः लवणसरोवरे प्रसरेयुः । अनया व्यवस्थया पञ्चाशत्सहस्राणां गृहाणां पर्याप्ता विद्युच्छक्तिः उत्पन्ना भविष्यति । एतदुत्पादनार्थं निर्दिष्टः समयः 1988 क्रिस्ताब्दः ।— एषा वार्ता "सैन्स् डैजेस्ट्" पत्रिकायां प्रकटीकृता ।





## प्रपञ्चे बृहत्-पुष्पमाला

अमेरिका देशे जमैका नगरे प्रसिद्धः भारतीयः योगी चिन्मयः दशसहस्राणि गीतानि समापितवान् । तस्मिन् सन्दर्भे बृहत्-पुष्पमाला समर्पिता । दशसहस्रैः पुष्पैः ग्रथिता एषा प्रपञ्चे एव बृहत्-पुष्पमाला इति जनाः कथयन्ति । योगी चिन्मयः पाण्डिचेरि अरविन्दाश्रमे शिक्षणं प्राप्तवान् ।

## भवन्तः जानन्ति वा ?

1 भूगर्भे प्रपञ्चे एव बृहद्गुहाः कुत्र सन्ति ?
2 बृहदाकाराः हिमखण्डाः प्रपञ्चे केषु केषु प्रदेशेषु दृश्यन्ते ?
3 प्रपञ्चे अत्युन्नतः जलपातः कुत्र अस्ति ?
4 प्रपञ्चे बृहदाकारः अग्निपर्वतः कुत्र अस्ति ?
5 एष्याखण्डे अतिविशालं कृत्रिमसरोवरं कुत्र अस्ति ?

(उत्तरम् ६४ तमे पृष्ठे)




[महामायस्य अद्भुतशक्तयः सर्वाः पिङ्गलेन वशीकृताः । तदा भल्लूकपर्वते निवसन्तः पिशाचाः सर्वे परस्परं विवदितुम् आरब्धवन्तः । पद्मपादः भल्लूककेतुम् आनेतुं पिङ्गलं प्रेषितवान् । पिङ्गलः भल्लूककेतुम् आनीतवान् । तदा पिशाचाः सर्वे कोलाहलं कुर्वन्तः भल्लूककेतोः समीपम् आगतवन्तः ।]

"इतःपरं विवादस्य न अवकाशः । अस्माकं कृते युक्तः नायकः लब्धः..." इति वदन्तः पिशाचाः कूर्दमानाः नृत्यन्तः च आगतवन्तः । एतत्सर्वं दृष्ट्वा पद्मपादस्य मनसि एव हासः ! किन्तु पिशाचानां स्थूलकायं, कठोरध्वनिम् अतिकृष्णवर्णम् असुन्दरकेशान्, रक्तनेत्रे, औष्ठौ विदीर्य बहिरागतान् दंष्ट्रान्, अनागरिक प्रवृत्तिं, आकारं व्यवहारं च दृष्ट्वा जुगुप्सितः भल्लूककेतुः, मुखं परिवर्तितवान् । एतत् दृष्ट्वा पद्मपादः पिङ्गलं समीपे आहूय, मन्दस्वरेण तस्य कर्णे एवम् उक्तवान्— 'पिङ्गल, एषः भल्लूककेतुः यद्यपि इदानीम् अस्माकं वशवर्ती, तथापि अत्रैव तिष्ठतु । एते पिशाचाः प्राणि-सदृशाः । नायकं विना स्थातुम् अनर्हाः । एतेषां देहशक्तिः अधिका । परं बुद्धिशक्तिः न्यूना एव । अतः भल्लूककेतुः अस्मदादेशानुसारेण



पिशाचान् नियमयन् अस्मिन् पर्वते एव वसतु । वयम् इतः गच्छामः' इति । तदा भल्लूककेतुः एव पिङ्गलम् उक्तवान्—"प्रभो ! इदानीं भवान् एव शरणं मम । भवतः गुरोः अभिप्रायः ज्ञातः मया । किन्तु अहम् एतेषां क्षुद्रपिशाचानां नायकः भवितुं न इच्छामि । इतःपरम् अहं भवतः पादसेवकः । भवतः सेवा एव मम महदनुग्रहः । कृपया गुरोः अनुमतिं सम्पाद्य मां भवता सह एव नयतु" इति ।

पिङ्गलः निरुत्तरः पद्मपादमुखं दृष्टवान् । पद्मपादः भल्लूककेतुम् उक्तवान्—"भल्लूककेतो ! भावावेगं विना सम्यक् चिन्तयतु प्रथमम् । अस्मिन् पर्वतप्रान्ते निवसतः पिशाचगणस्य नायकत्व-निर्वहणं नाम महत्तरं कार्यम् । अनेन भवतः अपि कीर्तिः" इति ।

"हं हो ! अहम् भावावेगे न अस्मि । एतेषां पिशाचानां सहवासः सर्वथा मास्तु । कीर्तिः पदवी वा मम मास्तु एव" इति वदन् भल्लूककेतुः पद्मपादं साष्टाङ्गं नमस्कृतवान् ।

तावति काले, पिशाचाः भल्लूककेतुं परिवार्य —"अहो ! भल्लूककेतुः अस्माकं नायकः । हो, हो" इति सन्तोषेण नर्तनं कृतवन्तः । कर्णकठोरं तेषां विकृतध्वनिं श्रुत्वा खिन्नः पिङ्गलः उक्तवान्— "आर्य, पद्मपादमहोदय ! मम मनसि एकः उपायः स्फुरितः । तथा कृतं चेत् सर्वेषाम् अपि समस्या परिहृता भविष्यति । यदि अनुज्ञां ददाति, कथयामि" इति ।

"किं तत्?" पृष्टवान् पद्मपादः ।

"भल्लूककेतोः तु अस्माकं सेवायाम् एव तृप्तिः । अतः सः पिशाच-नायकत्वेन अत्र पर्वतप्रान्ते स्थातुं न इच्छति । एतान् पिशाचान् एवमेव त्यजामः चेत् एते यत्किमपि अकार्यं कुर्युः सुरापानतः मत्ताः वानराः इव । तदा लोकस्य अपि कष्टम्, अस्माकम् अपि अपकीर्तिः । अतः एते समूलं नाशनीयाः । एतेषाम् उपरि महामायस्य अप्रतिमखड्गस्य प्रयोगं कुर्मः । एतान् नाशयामः" इति ।

एतद् वचनं श्रुत्वा सर्वनाशभीताः पिशाचाः हाहाकारं कृतवन्तः । "मास्तु मास्तु" इति आक्रोशं कृतवन्तः । केचन पिशाचाः क्रुद्धाः । केचन अतीवभीताः पलायितुम् आरब्धवन्तः ।

अन्ये केचन किंकर्तव्य-विमूढाः मौनं स्थितवन्तः । अपरे चिन्तामग्नाः अभवन् । तदा तेषु दीर्घकेशी एकः सर्वान् पिशाचान् एकत्र समाहूय पिशाचभाषायां किमपि वक्तुम् आरब्धवान् । प्रथमं तस्य वाक्यं न कोऽपि श्रुतवान् । किन्तु सः स्वप्रयत्नम् अपि न त्यजति । पुनः पुनः पिशाचान् उद्दिश्य उच्चैः उक्तवान् । क्रमेण सर्वे पिशाचाः तस्य वचने सञ्जातविश्वासाः अभवन् । दीर्घकेशी यथा वदति तथा कर्तुम् अङ्गीकृतवन्तः। अन्ते पिशाचाः एककण्ठेन उक्तवन्तः—"महामान्त्रिकप्रभो ! अस्माकं नाशनं न युक्तम् । यदि भल्लूककेतुः अस्माकं नायकः भवितुं न इच्छति, तर्हि वयम् एव अस्माकं नायकस्य चयनं कुर्मः । भवान् अनुमतिम् अनुगृह्णातु" इति ।



"एवं वा? तर्हि समीचीनम् । अत्र मम आक्षेपः नास्ति । भवन्तः नायकत्वसमस्यां कथं परिहरन्ति इति इदानीम् एव प्रदर्शयन्तु । वयम् अपि परिशीलयामः" इति उक्तवान् पद्मपादः ।

"मनुष्येषु इव अस्मासु अपि बलाढ्यः समर्थः एव नायकः भवति । कः सर्वसमर्थः इति इदानीम् एव निर्णयं कुर्मः ।" इति उक्तवन्तः पिशाचाः । अनन्तरं मुष्टीमुष्टि, केशाकेशि युद्धं प्रवृत्तम् ।

"एषः क्रमः युक्ततरः" इति सहर्षम् उक्तवान् पिङ्गलः । नायकत्वसम्पादनार्थं प्रवृत्तं युद्धं शीघ्रं न समाप्तम् । पिशाचाः क्षणे क्षणे रूपान्तरं धरन्तः युद्धं कुर्वन्ति स्म । व्याघ्ररूपिणं नाशयितुं केचन गजरूपं धरन्ति स्म । गजरूपिणं नाशयितुम् अन्ये केचन सिंहरूपं धरन्ति स्म । केचन सर्परूपिणः, अन्ये केचन गजरूपिणः । दर्शकानां नेत्रयोः उत्सवः !

एवं किञ्चित्कालम् एषः विकृतसङ्ग्रामः प्रवृत्तः । केचन मृताः अपि । अन्ते अवशिष्टाः सर्वे ऐकमत्येन बृहत्कायम् एकं नायकम् अङ्गीकृतवन्तः । सः पर्वतसदृशकायः, आरक्तनेत्रः, उग्ररूपी च आसीत् । 'पिशाचानां सर्वेषां नायकः अभवम्' इति तस्य महान् प्रमोदः । पिशाचैः नीयमानः सः आगत्य पद्मपादस्य पादयोः पतितः । यथाकथञ्चित् एका समस्या परिहृता इति पद्मपादस्य तृप्तिः सञ्जाता । पद्मपादः पिशाचनायकस्य कृते आशीर्वादं कुर्वन्

उक्तवान्—"इतः परं भवन्तः अस्मिन् भल्लूक-पर्वते यथेष्टं विहारं कर्तुम् अर्हन्ति । किन्तु अहंकार-मदमत्ताः ग्रामं प्रविश्य जनान् पीडयन्ति चेत् परिणामः अन्यथा एव भवेत् । यावत् भवन्तः जनान् न पीडयन्ति, तावत् मम पिङ्गलस्य च अनुग्रहः भवताम् उपरि भविष्यति । इदानीं भवन्तः स्वैरं गन्तुम् अर्हन्ति" इति ।

मृत्युभयात् विमोचिताः सर्वे पिशाचाः पद्मपादस्य वचनं श्रुत्वा अतीव संतुष्टाः अभवन् । तस्य सद्गुणान् वर्णयन्तः पुनः पुनः सन्तोषेण उच्चैः शब्दं कृतवन्तः । तेन शब्देन समग्रः पर्वतप्रान्तः प्रतिध्वनितः अभवत् । पिशाचानां मुखेषु आनन्दभावः विलसति स्म । आनन्दातिरेकेणयुक्ताः पिशाचाः सर्वे स्वनायकं स्कन्धये आरोप्य, जयघोषं कुर्वन्तः पर्वतशिखरं गतवन्तः ।

पद्मपादः प्रसन्नवदनः किञ्चित्कालपर्यन्तम् एतेषां गमनं पश्यन् आसीत् । अनन्तरं सः पिङ्गलम् उक्तवान्—"पिङ्गल ! एते पिशाचाः आकारमात्रेण घोररूपिणः । एतेषां मनसि आकारसदृशं घोरं किमपि नास्ति । एते बलात् भीताः । पश्यतु, साधवः इव कथम् अस्माकं वचनम् अङ्गीकृतवन्तः ! एवमेव एतेषाम् उपरि अस्माकम् आधिपत्यं भविष्यति चेत् समीचीनं भवति । तदा एतेभ्यः अस्माकं वा दुर्बलानां ग्रामस्थानां वा भीतिः क्वापि न भविष्यति । एते सम्यक् अस्माकं वशे आनीताः । एतेषां नियमने भवदीयं सहकारम् अहं कदाऽपि न विस्मरामि । गृह-गमनतः पूर्वं भवान् किञ्चित्कालं मम अतिथिः भवतु" इति ।



पिङ्गलः "तथैव अस्तु" इति अङ्गीकृतवान् । पद्मपादः मुष्टिमितां मृत्तिकां स्वीकृत्य अभिमन्त्र्य क्षिप्तवान् । तदानीं पिशाचगर्दभद्वयं हेङ्कारं कुर्वत् भूमिं विभिद्य आगतम् ।

पद्मपादः एकं पिशाचम् आरूढवान् । पिङ्गलः अपरं गर्दभम् आरोढुं प्रवृत्तः । तदा भल्लूककेतुः नमस्कृत्य उक्तवान्—"प्रभो ! भवान् मम स्कन्धम् आरुह्य उपविशतु । अहं भवतः सेवकः । पुष्पवत् भवन्तम् उन्नयामि" इति ।

पिङ्गलः स्मयमानः पद्मपादस्य अनुमत्यनुसारं भल्लूककेतोः स्कन्धम् आरूढवान् । पद्मपादस्य गर्दभः चत्वारि पदानि अग्रे गत्वा आकाशम् उत्पतितवान् । तम् अनुसृत्य भल्लूककेतुः अपि आकाशमार्गे गतवान् । आरोहक-रहितः अन्यः गर्दभः तौ अनुसृत्य आकाशमार्गे गतः ।

अरण्यानि, पर्वताः, नद्यः च अतीताः । सूर्यास्त-समये ते एकस्य नगरस्य समीपम् आगतवन्तः । पद्मपादः पिङ्गलम् उक्तवान्- "तत्र दृश्यमानम् एव मम पितृगृहम् । मम अग्रजद्वयम् अपि शुकसरोवरे आहुतिं गतम् । इदानीम् अहम् एव गृहस्य अधिपतिः । पित्रा अनुगृहीतः मन्त्रग्रन्थः इतःपरं मदीयः एव" इति ।

पद्मपादस्य वाहनभूतः गर्दभः भूमिम् अवतरन् पद्मपादगृहस्य पुरतः स्थितः । भल्लूक-केतुः अपि तत्रैव अवतीर्य पिङ्गलम् अवतारित-वान् । गृहं परितः प्राकारः आसीत् । प्राकारमुखे अयोनिर्मित-द्वारस्य पुरतः कृष्णवर्णीय-जनद्वयं रक्षकत्वेन स्थितम् आसीत् । तौ पद्मपादं दृष्ट्वा शीघ्रं स्वहस्तस्थितं शूलम् एकवारम्





उन्नमय्य—"जयतु पद्मपादः" इति जयघोषं कृतवन्तौ ।

प्रथमं पद्मपादः द्वारप्रवेशं कृतवान् । तम् अनुसृत्य पिङ्गलः अपि प्रविष्टवान् । अनन्तरं पिशाचगर्दभद्वयम् अपि अदृश्यतां गतम् । भल्लूककेतुः एकस्मिन् पार्श्वे हस्तौ बद्ध्वा स्थितवान् । पद्मपादः पिङ्गलेन सह गृहस्य पुरतः विद्यमानम् उद्यानं प्रविश्य, ततः गृहसमीपम् आगतवान् । तदा सोपानस्य उपरि स्थितः दीर्घ-श्वेत-श्मश्रुसहितः एकः वृद्धः दृष्टः । पद्मपादः तं दृष्ट्वा सगौरवं नमस्कृत्य पृष्ठतः स्थितं पिङ्गलम् उक्तवान्— "पिङ्गल ! एते एव मम तातपादस्य गुरवः" इति ।

पिङ्गलः अपि तं नमस्कृतवान् । वृद्धः पिङ्गलं सूक्ष्मं परिशील्य पद्मपादम् उक्तवान्— "पद्मपाद ! एषः किल अवन्तिनगरीयः वटुः ?"

"आम्, एषः एव सः वटुः" इति उक्तवान् पद्मपादः । तत् श्रुत्वा वृद्धः परमानन्देन उक्तवान्— "एवं वा? तर्हि भवता महामायस्य मरणस्थले स्थिताः अपूर्वशक्तयः वशीकृताः किल?" इति ।

पद्मपादः मुखतः किमपि न उक्तवान् । अङ्गुल्यां धृतम् अङ्गुलीयकं, वज्रखचितं खड्गं भूगोलं च वृद्धस्य कृते प्रदर्शितवान् । वृद्धः तानि वस्तूनि किञ्चित्कालं परीक्ष्य उक्तवान्— "पद्मपाद ! इतःपरं भवन्तं जेतुं समर्थः मान्त्रिकः अस्मिन् प्रपञ्चे अन्यः कोऽपि नास्ति एव । भवतः पित्रा प्रयत्नशतेन अपि साधयितुम् अशक्यं, भवान् साधितवान् । एवं रीत्या पितुः आत्मा यथा तृप्येत तथा कृतवान् । धन्यः भवान्, पुण्यवान् च" इति । "इतःपरं पित्रा अनुगृहीतानां ग्रन्थानां पूर्णस्वाम्यं मम किल ?" इति पद्मपादः पृष्टवान् । वृद्धः स्मयमानः उक्तवान्—"विश्वविजेत्री शक्तिः एव भवता सम्पादिता अस्ति । किं पुनः अनेन महाग्रन्थेन केवलेन ? भवता सम्पादितां शक्तिम् अतिरिच्य अस्मिन् ग्रन्थे अन्यत् किमपि नास्ति । 'आत्मना साधयितुम् अशक्यं स्वपुत्रैः वा साधनीयम्' इत्येव भवतः पितुः अन्तिमा आशा आसीत् । तदर्थम् एव मरणतः पूर्वं सः ग्रन्थविषये तादृशनियमान् उक्तवान् । महामायः भवतः पितुः

प्रबलविरोधी । तम् एव महामायं भवान् जितवान् किल ?" इति ।

वृद्धवचनं श्रुत्वा पद्मपादः 'स्वपितुः हृदाशयः कः आसीत् ?' इति ज्ञातवान् । पद्मपादः चिन्तितवान् मनसि— "प्रबलविरोधिनं महामायं शक्तिहीनं कर्तुम् एव पिता मम उपयोगं स्वीकृतवान् । अतिसमर्थयोः अपि अग्रजयोः आहुत्यनन्तरम् एव विजयः मदायत्तः सञ्जातः" इति ।

पद्मपादे एवं चिन्तयति, वृद्धः पिङ्गलस्य भुजं प्रीत्या आस्फालयन् उक्तवान्- "अवन्तीनगरीयः वटुः भवान् पद्मपादस्य सहायकः सञ्जातः इत्येतत् भाग्यम् एव । भवता एकं महत्कार्यं सम्पादितम् । एतदर्थम् अहं भवन्तम् अभिनन्दामि" इति ।

पिङ्गलः कृतज्ञतापूर्वकं वृद्धं नमस्कृतवान् । सः एकसप्ताहपर्यन्तं पद्मपादस्य अतिथिः आसीत् । अनन्तरं स्वगृहं गन्तुम् आलोचितवान् । तदा पद्मपादः तस्य कृते अत्यमूल्यानि वस्त्राणि सुवर्णरत्नादीनि च उपायनरूपेण दत्तवान् । पिङ्गलः तत्सर्वं स्वीकृतवान् ।

एतावदेव न, पद्मपादः पिङ्गलं प्रेषयितुं प्राकारद्वारपर्यन्तम् आगतवान् । तत्रैव महामायहस्ततः वशीकृतं वस्तुत्रयं प्रदर्श्य उक्तवान् "मित्र ! एषु भवदभिलषितं यत्किमपि एकं स्वीकरोतु । तच्च सन्तोषेण ददामि" इति ।

पिङ्गलः तत् न अङ्गीकृतवान् । सः स्मयमानः



उक्तवान्— "पद्मपाद ! महाशक्तिसम्पन्नानि एतानि वस्तूनि सामान्यस्य मम समीपे किमर्थम्? तेन मम किं वा प्रयोजनम् ? एतानि भवतः समीपे एव भवन्तु । यदि भवान् अन्यथा न चिन्तयति तर्हि किञ्चित् प्रार्थयितुम् अहं इच्छामि" इति ।

पद्मपादः उक्तवान्— "वदतु भोः, प्रार्थितं ददामि एव" इति ।

"भवतः समीपे महत्वपूर्णः एकः स्यूतः अस्ति किल ? अस्य माहात्म्येन पाककार्यं विना एव सकलपाकपदार्थाः सिद्धाः भवन्ति । यदि तत् मम समीपे स्यात्, वृद्धा मम माता तुष्यति । यतः प्रतिदिनं तस्याः पाककरणकष्टं न्यूनं भविष्यति" इति उक्तवान् पिङ्गलः ।

"तत् वा? अवश्यं ददामि" इति वदन् पद्मपादः तं स्यूतम् आनीय दत्तवान् । पिङ्गलः वृद्धं मन्त्रवेत्तारं, गुरुं पद्मपादं च नमस्कृत्य भल्लूककेतुम् आरूढवान् । आकाशमार्गे तस्य प्रयाणं प्रवृत्तम् ।

सान्द्रैः मेघैः व्याप्ते आकाशे लीलया विहरन् भल्लूककेतुः मध्याह्नसमये अवन्तीनगरस्य सीमाप्रदेशं स्वगृहं च दृष्टवान् । तदेकदृष्ट्या स्वगृहं पश्यन् भल्लूककेतुम् उक्तवान्-"अये ! भल्लूककेतो ! अलम् अग्रगमनेन । तत्र वृक्षसमूहमध्ये अवतारयतु" इति ।

भल्लूककेतुः पिङ्गलेन प्रदर्शिते स्थले अवन्ति-नगरस्य सीमाप्रदेशे एकस्यां वृक्षवाटिकायाम् अवतीर्णः ।

पिङ्गलः भल्लूककेतोः स्कन्धात् अवतीर्य उक्तवान्—"भल्लूककेतो ! विचित्राकारं भवन्तं मया सह नयामि चेत् अनर्थम् एव स्यात् । जनाः मूर्च्छिताः भवेयुः । मम माता तु भवन्तं दृष्ट्वा .....। हन्त ! मास्तु एव एतत् सर्वम् । कः परिहारः अस्य ?" इति वदति ।

पिङ्गलस्य मनस्थितिं जानन् भल्लूककेतुः हसन् उक्तवान्—"प्रभो ! चिन्ता मास्तु । भवान् एकः एव नगरं प्रविशतु । यदा मम साहाय्यम् अपेक्षितं तदा मदीयं मर्ममन्त्रं स्मरतु । अहं तदा प्रत्यक्षः भवामि" इति । अनन्तरं सः पिङ्गलस्य कर्णे किमपि मर्ममन्त्रम् उपदिश्य अदृश्यतां गतवान् ।

पिङ्गलः पद्मपादेन दत्तां धनराशिं वहन् गृहं गतवान् । यदा एषः गृहसमीपम् आगतवान् तदा द्वारप्रदेशे उपविष्टायाः अतीवकृशायाः स्वमातुः शुष्कध्वनिं श्रुतवान्—"भोःभोः, धर्मदातारः ! अस्याः वृद्धायाः साहाय्यं कुर्वन्तु । बुभुक्षा बाधते माम् । अनाथा अहम्...." इति ।

हस्तं प्रसार्य सदीनं याचमानां तां दूरतः एव दृष्टवान् पिङ्गलः । दारुणम् एतत् दृश्यं दृष्ट्वा पिङ्गलस्य हृदयं विदीर्णम् इव । शरीरं कम्पते ! यथाकथञ्चित् आत्मानं सम्भालयन् सः— "अम्ब ! किम् एतत् ? भवत्याः ईदृशी दुर्गतिः कथं प्राप्ता ?" इति वदन् मातुः समीपं धावितवान् । (अनुवर्तते)





# पद्मनाभस्य विवाहः

पुनः पुनः अवचितः अपि वृक्षः यथा पुनः पल्लवितः भवति तथैव विक्रमस्य उत्साहः अपि वर्धते स्म । एवं राजा त्रिविक्रमः वर्धितोत्साहः वेतालं स्कन्धे आरोप्य यथापूर्वं मौनमुद्रया श्मशानाभिमुखं गन्तुं प्रवृत्तः । तदा त्रिविक्रमस्य मौनभङ्गार्थं प्रवृत्तः वेतालः एवं उक्तवान् 'भोः महाराज ! कष्टे सत्यपि आरब्धं कार्यं समापनीयम् इति भवतः आग्रहः श्लाघनीयः एव । किन्तु दुःसाध्ये अस्मिन् कार्ये भवन्तं यः प्रेरितवान् सः मित्रस्वरूपी शत्रुः एव इति मम भावना । धैर्यं, साहसः, बुद्धिः, कार्यनैपुण्यम् इत्येते गुणाः यदि भवन्ति, तदा मुग्धस्वभावाः अपि दुःसाध्यं कार्यं साधयन्ति एव । उदाहरणार्थं भवतः कृते आग्रहवतः पद्मनाभस्य कथां कथयामि, शृणोतु । कथां शृण्वतः गच्छतः भवतः मम भारः अपि न्यूनः इव प्रतिभाति' इति । अनन्तरं च कथा आरब्धा ।

पद्मनाभनामकः एकः तरुणः कुमुद्वतीनगरे

## वेतालकथा



वसति स्म । कुमुद्वती-नगरं विशालस्य पौण्ड्रदेशस्य राजधानी आसीत् । पद्मनाभः आकृत्या रूपेण च सुन्दरः पुरुषः । किन्तु स्वभावेन मुग्धः । 'श्वेतं सर्वं क्षीरम्' इति तस्य भावना । तस्य दृष्ट्या सर्वं सत्यमेव । यः कोऽपि यदि असत्यं वदति तत् सत्यम् इत्येव भावयति स्म । दौर्भाग्येण तस्य बान्धवाः अपि न आसन् ।

रत्नभद्रः इति तस्य नगरस्य धनिकः । तस्य पुत्री सुलक्षणा नाम्नी । सा सुन्दरी युवती च । एकदा सा शिबिकाम् आरुह्य नगरमार्गे गच्छति स्म । तदा तत्रैव गच्छतः पद्मनाभस्य दृष्टिः तस्याः उपरि पतिता । तस्याः अनुपमं सौन्दर्यं नेत्रनिमीलनम् अकुर्वन् एव दृष्टवान् । तस्याः रूपलावण्येन मोहितः तत्क्षणम् एव सः निश्चितवान् 'सुलक्षणया सह मम विवाहः भवेत् एव' इति । इदं साध्यं वा असाध्यं वा इति किमपि न चिन्तितवान् ।

रत्नभद्रः कुमुद्वती-नगरे एव प्रसिद्धः वणिक् । सः कोटीश्वरः । पद्मनाभः तु अनाथः निर्धनः च । अतः रत्नभद्रस्य पुत्र्या सह विवाहः दुःसाध्यः एव । तथापि पद्मनाभस्य सरले मनसि एतादृशः भेदभावविचारः एव न प्रविष्टः । स्वस्य सुलक्षणायाश्च स्थानं किम् इत्यपि सः न चिन्तितवान् । केवलं तस्याः सौन्दर्येण आकृष्टः आसीत् ।

तस्मिन् सायङ्काले पद्मनाभः मित्रस्य रविवर्मणः समीपे सुलक्षणायाः विषयम् उक्तवान् । पद्मनाभस्य विषये रविवर्मणः असूया आसीत् । तत्र कारणं तु सर्वे अपि 'पद्मनाभः सुन्दरः' इति कथयन्ति इत्येव । तथापि असूयां बहिः न प्रदर्शितवान् । किन्तु तम् उपहासस्य पात्रं कृत्वा तृप्तिम् अनुभवितुं समयं निरीक्षते स्म ।

सुलक्षणया सह अहं विवाहम् इच्छामि इत्युक्त्वा रविवर्माणं पृष्टवान्— 'अत्र कः उपायः ? कृपया सूचयतु' इति ।

"पद्मनाभ ! एतत् मङ्गलकरं कार्यम् । शुभस्य शीघ्रम् इति ज्येष्ठाः वदन्ति । विलम्बः न करणीयः । भवादृशः सुन्दरः वरः जामाता यदि भवति तर्हि कस्य सन्तोषः न भवति वा ? रत्नभद्रः अवश्यं सन्तुष्टः भवति । भवान् गत्वा पृच्छतु । रत्नभद्रः सन्तोषेण स्फीतः भवति । सुलक्षणा अपि भवादृशं सुन्दरं पतिं लब्ध्वा धन्या भवतु" इति रविवर्मा सूचनां दत्तवान् ।

रविवर्मणः वचने या व्यङ्ग्यभावना आसीत् तां ज्ञातुम् असमर्थः पद्मनाभः, मित्रस्य वचनेन वर्धितोत्साहः धनिकस्य रत्नभद्रस्य समीपं गत्वा पृष्टवान्— "श्रीमन् ! मां पश्यतु । भवतः पुत्र्याः अनुरूपः वरः भवितुम् अहं अर्हो वा न वा इति । यदि अर्हः तर्हि मया सह सुलक्षणायाः विवाहो भवतु" इति ।

रत्नभद्रः यथा महाधनिकः तथा उदार-मनस्कः अपि आसीत् । 'अनाथः पद्मनाभः सरल स्वभाववान्' इति सः जानाति स्म । निराकरणम् अकुर्वन् स्मयमानः सः उक्तवान्— "मम पुत्रीं दत्वा भवता सह विवाहं करोमि । किन्तु भवता तत्पूर्वम् एकं कार्यम् अवश्यं करणीयम् । तुला परिमितं सुवर्णम् आनीय मम कृते ददातु" इति ।

तुला परिमितं सुवर्णम् आनेतुं सः असमर्थः इत्येव रत्नभद्रस्य भावना । किन्तु पद्मनाभः हताशः न उपविष्टवान् । मित्रस्य रविवर्मणः समीपम् आगत्य उपायं प्रार्थितवान् ।

"सुवर्णं किल अपेक्षितम् ? तदर्थं क्लेशः एव नास्ति । कुसीदकस्य सोमनाथस्य समीपं गत्वा ऋणं पृच्छतु । भवान् रत्नभद्रस्य जामाता भविष्यति इति सः यथेष्टम् ऋणं ददाति" इति रविवर्मा उक्तवान् ।

समनन्तरमेव पद्मनाभः सोमनाथस्य समीपं गत्वा सर्वं स्वकीयवृत्तान्तं निवेद्य प्रार्थितवान्— "मम कृते तुलापरिमितं सुवर्णम् ऋणरूपेण ददातु" इति ।

"एषः मुग्धः तरुणः । एनं किञ्चित्



परिहासपात्रं करोमि" इति सोमनाथः चिन्तितवान् । अतः सः पद्मनाभम् उक्तवान्— 'भवादृशस्य कृते मादृशः सामान्यः कथम् ऋण दातुं शक्तः ? तत्र पश्यतु । नदीतीरे एकः वृक्षः दृश्यते किल ? तस्य वृक्षस्य अधः कश्चित् कापालिकः वसति । सः पित्तलम्, अयः इत्यादि लोहं सुवर्णरूपेण परिवर्तयति । भवान् तत्र गत्वा पृच्छतु । सः दानरूपेणैव तुलामितं सुवर्णं ददाति" इति ।

सुवर्णं दानरूपेण लभ्यते इति ज्ञात्वा पद्मनाभस्य महान् सन्तोषः अभवत् । कापालिकस्य समीपं गत्वा प्रार्थितवान्— "स्वामिन् ! मम कृते तुलामितं सुवर्णं दानरूपेण ददातु" इति ।

सः कापालिकः महान् वञ्चकः आसीत् ।



लोहपरिवर्तनविद्याम् उपदिशामि इति मुग्धेभ्यः बहु धनम् अपहरति स्म। तथा सङ्गृहीतं सर्वं धनं गौरमुखो नाम चोरः कदाचित् अपहृतवान्। तस्य चोरस्य ग्रहणार्थं कापालिकः आलोचयन् आसीत्।

"पद्मनाभ! भवान् न केवलं सुन्दरः, अपि तु बुद्ध्या अपि चतुरः, स्वभावेन अपि धैर्यवान्। अतः भवान् एकं कार्यं करोतु। नगरात् बहिः अरण्ये गौरमुखो नाम महाचोरः वसति। तं मम समीपं भवान् यदि आनयति, तदा अवश्यं तुलामितं सुवर्णं दानरूपेण ददामि" इति कापालिकः उक्तवान्।

अनन्तरं पद्मनाभः नगरात् बहिः स्थितम् अरण्यं गतवान्। तत्र इतः ततः अन्विष्य गौरमुखस्य प्रदेशं प्रविष्टवान्। तत्र चोरः गौरमुखः आदरेण सम्भाषणं कृत्वा पद्मनाभं पृष्टवान्— "वत्स! मम गृहं किमर्थं आगतवान्?" इति।

पद्मनाभः "नैव" इत्युक्त्वा स्वविवाहस्य विषयं उक्तवान्— महाशय! कापालिकः कथितवान् 'गौरमुखं मम समीपम् आनयतु। अनन्तरं तुलापरिमितं सुवर्णं दानरूपेण दास्यामि' इति। अतः कृपया मया सह भवान् आगच्छतु। भवतः आगमनेन मम विवाहः भविष्यति" इति।

एषः पद्मनाभः अतीव सरलः इति गौरमुखः ज्ञातवान्। अतः परिहासं कर्तुम् आलोच्य चोरः उक्तवान्—"पद्मनाभ! तुलामितेन सुवर्णेन किं प्रयोजनम्? दश तुलामितं सुवर्णं प्राप्तुम् उपायं दर्शयामि। तत्र पश्यतु। तत्पर्वतस्य गुहायाम् एकः कृष्णभूतः वसति। तस्य समीपं गत्वा पृच्छतु। सः भूतः यथेष्टं सुवर्णं ददाति" इति।

चोरस्य वचनं श्रुत्वा पद्मनाभः सुलक्षणया सह विवाहः जातः इव आत्मानं भावितवान्। बहु सन्तोषेण पर्वतस्य गुहायाः समीपं गतवान्। तत्र गुहायाः पुरतः शिलायां कृष्णभूतः उपविष्टः आसीत्।

वस्तुतः कृष्णभूतः यं कमपि न पीडयति स्म। किन्तु जनाः तस्य भयङ्करं रूपं दृष्ट्वा पलायनं कुर्वन्ति स्म। शिशुः इव निष्कल्मषहृदयः पद्मनाभः निर्भयं कृष्णभूतस्य समीपं गत्वा नमस्कारं कृतवान्। अनन्तरं स्वकीयं वृत्तान्तं सर्वं निवेद्य प्रार्थितवान्— "रत्नभद्रस्य पुत्र्या सुलक्षणया सह मम विवाहार्थं भवान् साहाय्यं

अवश्यं भविष्यति" इति ।

वेतालः कथां समापयित्वा— 'भोः महाराज ! त्रिविक्रम ! लोकवृत्तान्तनिष्णातः व्यवहारनिपुणः महाधनिकः च रत्नभद्रः । तादृशः परम मुग्धाय पद्मनाभाय कथं स्वस्य पुत्रीं दातुं निश्चितवान् ? कृष्णभूततः रत्नभद्रः भीतः सन् तथा निश्चयं कृतवान् वा ? अपि च पद्मनाभः न केवलं तुलामितं सुवर्णं किन्तु ततः अपि अधिकमूल्यानि वस्त्राणि आनीय दातुं शक्तः अपि आसीत् । तादृशम् अवकाशम् अपि रत्नभद्रः किमर्थं सार्थकं न कृतवान् ? एतेषां संशयानां समाधानं ज्ञात्वा अपि यदि न उत्तरयति, भवतः शिरः सहस्रधा भिन्नं भवति" इति उक्त्वा तूष्णीम् अभवत् ।

राजा त्रिविक्रमः एवम् उक्तवान्— 'कृष्णभूततः रत्नभद्रः किञ्चित् अपि न भीतः । कृष्णभूतेन दीयमानस्य धनस्य विषये कोटीश्वरस्य तस्य का गणना ? यदा पद्मनाभद्वारा भूतस्य वृत्तान्तं ज्ञातवान् तदा रत्नभद्रः भावितवान् कृष्णभूतः मम कृते कामपि हानिं न जनयति । प्रत्युत उपकारम् एव कुर्यात्' इति । किन्तु पद्मनाभद्वारा कृष्णभूत तः अमूल्यम् एकं तत्त्वं रत्नभद्रः अवगतवान्— 'यः गुणवान्, बुद्धिमान्, कार्ये पटुः, कार्यपारगः प्रामाणिकः च सः दरिद्रः अपि धनिकः एव । यः तु अत्र व्यतिरिक्तः, सः धनिकः अपि दरिद्रः एव । अतः धीराः पुरुषाः कालान्तरे उन्नतिं प्राप्नुवन्ति एव । पद्मनाभस्य मित्रं, कापालिकः, चोरः च सर्वे कुटिलबुद्धयः । ते स्वीयदुष्कार्यतः दण्डम् अनुभविष्यन्ति एव इति । एवं कृष्णभूततः सत्यतत्त्वं जानन् रत्नभद्रः भाविनः जामातुः मुग्धस्वभावं दोषत्वेन न परिगणितवान् । अपि च पद्मनाभः यदि मम जामाता भविष्यति, तर्हि तं वाणिज्यव्यवहारे नियोज्य सुलभेन लोकव्यवहारं शिक्षयामि । एवं लोकव्यवहारशिक्षणं न दुष्करम्' इति विचिन्त्य रत्नभद्रः पद्मनाभं जामातरं कर्तुं निश्चितवान्"

एवं राज्ञः मौनभङ्गे जाते, शीघ्रं एव वेतालः अदृश्यतां गत्वा यथापूर्वं वृक्षस्य शाखायां प्रलम्बमानः आसीत् ।



करोति इति" चोरः उक्तवान् । अतः तुलामितं सुवर्णं मम कृते ददातु । यावज्जीवं भवतः उपकारं न विस्मरामि" इति ।

"अये ! एषः कियान् मुग्धः ! मम समीपं निर्भयम् आगतवान् । एतस्य हृदयं सरलम् उदारं च" इति कृष्णभूतः पद्मनाभं मनसा श्लाघितवान् । आदरभावं च प्रदर्शितवान् ।

कृष्णभूतः गुहां प्रविश्य, अग्निः इव ज्वलत् वज्रचतुष्टयं बहिः आनीय तत् दर्शयन् उक्तवान्— "वत्स ! यदि भवान् इच्छति, न केवलं तुलामितं सुवर्णम्, अपि तु एतानि वज्राणि अपि दातुम् अहं सिद्धः । एतेषां वज्राणां मौल्यं दश तुलामितसुवर्णेन समानम् । किन्तु एतेषां वज्राणाम् आवश्यकता भवतः नास्ति इति भावयामि । अतः प्रतिनिवृत्य नगरं गच्छतु । रत्नभद्राय सर्वं वृत्तान्तं निवेदयतु । तथापि सः यदि सुवर्णम् इच्छति, अत्र आगत्य एतानि वज्राणि नयतु । तुलामितं सुवर्णं वोढुम् अपि भवान् अशक्तः" इति ।

पद्मनाभः कृष्णभूतस्य कृते नमस्कारं कृत्वा नगरं प्रत्यागतवान् । सर्वं वृत्तान्तं च रत्नभद्राय निवेद्य पृष्टवान्— "तानि वज्राणि आनयामि किम् ?" इति ।

रत्नभद्रः पद्मनाभस्य मनसः सारल्यं धैर्यं च दृष्ट्वा बहु सन्तुष्टः अभवत् । रत्नभद्रः बहु सन्तुष्टः अभवत् । सः प्रीत्यादरेण पद्मनाभस्य स्कन्धे स्वभुजं प्रसार्य उक्तवान्— "वत्स ! मम किमपि न अपेक्षितम् । भवान् मम जामाता भवितुम् अर्हः । भवादृशः एव जामाता मम अपेक्षितः । सुलक्षणया सह भवतः विवाहः





# महाराजस्य गानम्

मद्रदेशे महेन्द्रपुरी इति काचन नगरी आसीत्। तत्र शचीन्द्रः इति एकः राजा आसीत्। सः सङ्गीतासक्तः आसीत्। अतः सः महाराजः नूतनतया सङ्गीतशास्त्रस्य किञ्चित् अभ्यासं कृतवान्। अतः अन्येषाम् अपि स्वकीयं गानं श्रावयितुम् आरब्धवान्। यदा राजा गातुम् आरम्भं करोति, तदा तस्य आश्रितजनाः सचिवाः सर्वे तत्रैव उपविशन्ति स्म। महाराजस्य सङ्गीतं श्रोतुम् इच्छा न आसीत्। किन्तु मध्ये उत्थाय गन्तुं कस्यापि धैर्यं न भवति स्म। अनेन कारणेन तेषां सर्वे कार्यक्रमाः अस्तव्यस्ततां गताः। अतः एषः विषयः महाराजं प्रति वक्तव्यः इति ते सर्वे आलोचितवन्तः। किन्तु कथम् ?

ते सर्वे मिलित्वा चर्चां कृत्वा कृत्वा श्रान्ताः। किन्तु समस्यायाः परिहारः न लब्धः। साक्षात् महाराजस्य पुरतः यदा वदामः तदा तस्य गानस्य तिरस्कारः जातः इति सः चिन्तयति। तस्य महान् क्रोधः भवति। तदा अस्माकम् उद्योगानां का गतिः ? मरणशिक्षा अपि भवेत्।

महाराजस्य शचीन्द्रस्य आस्थाने वसन्तकः इति एकः विदूषकः आसीत्। तस्यापि महाराजस्य गानं सततं श्रुत्वा श्रुत्वा महती जामिता जाता। एकदा महाराजः गानं समाप्य पार्श्वे विदूषकं दृष्टवान्। सः विदूषकः गानं श्रुत्वा पीडितः इव तूष्णीं स्थितवान्। तस्य मुखे कापि भावना नासीत्। तं प्रति एवम् उक्तवान्— "मम सङ्गीते यत्किमपि इन्द्रजालम् अस्ति इति प्रतिभाति। मम गानसमये भवन्तः सर्वे चित्रलिखिताः इव उपविशन्ति। अतः अहं महान् गायकः अस्मीति भावयामि" इति।

एतत् वाक्यं श्रुत्वा विदूषकः भीतः इव मुखभावं कृतवान्। अनन्तरं "प्रभो! भवतां गानं श्रोतुम् एकदा ये सभायाम् उपविशन्ति, तदा गानमध्ये उत्थाय गन्तुं तेषां कथं वा धैर्यं भवेत् ?"

विदूषकेण उक्तस्य वचनस्य रहस्यं शीघ्रं



# मूलधनम्

एकस्मिन् ग्रामे परमेशः इति कृषिकः । तस्य अल्पा भूमिः । वृष्टिः अपि काले काले न भवति । सः परिश्रमेण कृषिं करोति स्म । तस्य पत्नी गौरी इति । सा अपि कष्टसहिष्णुः । सा सर्वदा सर्वेषु कार्येषु पत्युः साहाय्यं कर्तुम् इच्छति स्म । तयोः चत्वारः पुत्राः सञ्जाताः । परमेशः पत्नीं पुत्रपालने नियुज्य एकाकी कृषिकार्यं करोति स्म । पुत्राणां नामानि जयेशः नरेशः उमेशः रमेशः च । परमेशः मितव्ययेन स्वकीयान् चतुरः पुत्रान् पोषितवान् । इदानीं पुत्राः प्रौढाः । परमेशः किञ्चित् धनसञ्चयम् अपि कृत्वा, तद्धनेन पुरातनगृहं निष्कास्य, एकं नवीनं गृहम् अपि निर्मितवान् । ग्रामे नगरे च तस्य नाम अपि प्रसिद्धम् आसीत् ।

परमेशः पित्रार्जितां भूमिम् अतिरिच्य अन्यां भूमिं क्षेत्रं वा स्वयं कर्तुं न शक्तवान् । यतः सः एकाकी कुटुम्बपोषणं करोति स्म । परमेशस्य गौर्योः च सद्गुणान् दृष्ट्वा कन्यापितरः 'यदि अस्माकं कन्या एतत् गृहं प्रविशति, तर्हि सुखं जीवति' इति चिन्तयन्तः स्वयमेव आगत्य परमेशस्य पुत्राणां विवाहार्थं प्रार्थितवन्तः । प्राप्तवयस्कानां पुत्राणां विवाहः करणीयः एव इति कृत्वा परमेशः गौर्या सह समालोच्य विवाहम् अङ्गीकृतवान् । प्रथमं जयेशस्य विवाहः अभवत् । तस्य भार्या, धनलक्ष्मीः । सा तस्य ग्रामस्य कृषिकस्य 'राजप्प' इत्यस्य पुत्री । सा केवलं नाम्ना धनलक्ष्मीः । तस्याः पिता अपि परमेशवत् साधारणः कृषिकः एव । इदानीं परमेशस्य गृहे एका अधिका जाता । व्ययः अपि किञ्चिदिव अधिकः अभवत् । एतन्मध्ये चतुर्णां पुत्राणाम् अपि विवाहः जातः । वध्वः गृहम् आगताः । " इतः परं कथं कुटुम्बपोषणम् ?" इति परमेशस्य चिन्ता । पुत्राः स्वस्वजीवनव्यवस्थां स्वयं पश्येयुः इति तस्य विश्वासः । किन्तु तथा

महाराजः ज्ञातवान् । सः किञ्चिदपि न क्रुद्धः । प्रत्युत हसन् एव "भो वसन्तक ! मम गानं श्रोतुं ये ये उपविशन्ति, तेषु केचन मम अभिमानिजनाः, अन्ये च मम अधिकारात् भीताः इति इदानीं मम ज्ञानं जातम् । एतावत्पर्यन्तं मम ईदृशम् अज्ञानम् आसीत् इति दुःखं भवति" इति उक्तवान् ।

"प्रभो ! कृपया क्षन्तव्यम् । मम वचनेन भवतां क्रोधः भवेत् इति मम चिन्ता आसीत्" इति विदूषकः उक्तवान् ।

"तथा न । भवतः अभिनन्दनं करोमि । किन्तु इदानीम् एका समस्या । इदानीं कारणं विना मम गानत्यागेन वा, मम गानं श्रोतुं न कोऽपि आगच्छतु इति आज्ञया वा सर्वेषां संशयः भविष्यति । किञ्च एतावत्पर्यन्तं मम सङ्गीतेन भवतां सर्वेषां जामिता जाता इति महाराजस्य ममापि अपमानास्पदम् । अस्याः समस्यायाः परिहारः कथं भवेत् ? इति उक्त्वा महाराजः चिन्तामग्नः जातः ।

"प्रभो ! विषयाणां कथनरीतिः भिन्ना भिन्ना भवति । मम रीत्या अहं मम अभिप्रायम् उक्तवान् । तथैव भवतः गौरवस्य यथा हानिः न भवति तथा भवानपि आदेशं दातुं शक्नोति । किञ्चित् आलोचयतु प्रभो !" इति विदूषकः उक्तवान् ।

परस्मिन् दिने महाराजः गानस्य आरम्भं कृतवान् । अनन्तरं तत्र उपविष्टान् जनान् क्रोधेन दृष्ट्वा "एतावत्पर्यन्तं पश्यन् अस्मि । मम सङ्गीतस्य अभ्यासार्थम् एकान्ततायाः आवश्यकता अस्ति इति ज्ञातुं न कोऽपि शक्नोति वा ? यदा अहं गातुम् इच्छामि, तदा भवन्तः सर्वे तूष्णीम् अत्रैव परितः उपविशन्ति । इदानीम् अहमेव वदामि । अन्यथा गतिः नास्ति । इतः परं भवतां कार्याणि त्यक्त्वा यदि मम पुरतः गानं श्रोतुम् उपविशन्ति, तर्हि तीक्ष्णः दण्डः भविष्यति" इति उक्तवान् ।

एवं रीत्या अनपेक्षितात् सङ्गीतश्रवणात् विमोचनं प्राप्य सर्वेषां सन्तोषः अभवत् । महाराजे जातस्य अस्य परिवर्तनस्य कारणं तु कोऽपि न ज्ञातवान् ।





किमपि न अभवत् ।

एकदा सः ज्येष्ठपुत्रम् उक्तवान्— " पुत्र ! अस्माकं कृषिभूमिः विशाला नास्ति किल ? कुटुम्बस्य व्ययः तु दिने दिने वर्धते । आयव्ययं सन्तोलयितुं काचित् व्यवस्था चिन्तिता वा ? " इति ।

तदा ज्येष्ठपुत्रः उक्तवान्— "यदि इदानीं विद्यमानं क्षेत्रं पर्याप्तं न भवति, तर्हि अन्यस्य भूमिं कृष्यर्थं स्वीकुर्मः" इति । पुत्रस्य एतादृशम् उत्तरं श्रुत्वा खिन्नः परमेशः उक्तवान्—

"एतावत्पर्यन्तं वयं भूस्वामिनः इति जनाः अस्मान् गौरवेण पश्यन्ति स्म । यदि अस्मिन् एव ग्रामे वयम् इदानीम् अन्यस्य भूम्यां कृषिं कुर्मः, तर्हि अस्माकं गौरवं न्यूनं भवति । पूर्वं ये मानयन्ति स्म ते एव इदानीम् अधिकारं प्रदर्शयन्ति" इति ।

तदा ज्येष्ठपुत्रः किमपि न उक्तवान् । परमेशः अन्यान् पुत्रान् अपि पृष्टवान् । ते अपि ज्येष्ठपुत्रवत् एव वदन्ति स्म । "वृक्षतः पतितानि बीजानि चतुर्दिक्षु विकीर्णानि चेत् एव वृक्षाः पुष्टाः भवन्ति । वृक्षस्य पार्श्वे एव पतन्ति चेत् कथं वा पर्याप्ता वृद्धिः ? अनया रीत्या पुत्राः बोधनीयाः । तत् कथम् ?" इति परमेशः चिन्तितवान् । अन्ते एकः उपायः स्फुरितः । परमेशः नगरं गतवान् । "प्रत्यागमनसमये दिनद्वयं विलम्बः स्यात्" इति उक्तवान् गृहे ।

अपरस्मिन् दिने एकः किरातः परमेशस्य गृहम् आगतवान् । तदा गृहे ज्येष्ठपुत्रः आसीत् । किरातः ज्येष्ठपुत्रम् उक्तवान्— "श्रीमन् ! मदीयम् एकं वेणुवनम् अस्ति । तत्र अहं गृहं निर्मातुम् इच्छामि । यः कोऽपि वेणून् कर्तयित्वा स्थलं स्वच्छीकरोति चेत् वरम् आसीत् । वेणुः तु निश्शुल्कं दीयते" इति ।

ज्येष्ठपुत्रस्य आशा उत्पन्ना । "वेणुविक्रयणेन इदानीं लाभः एव ! व्ययः तु केवलम् आनयनस्य" इति सः चिन्तितवान् । अनन्तरं ज्येष्ठपुत्रः किरातेन सह गत्वा, वेणून् आनीय, नगरं प्रापितवान् । तत्र यदा एषः विक्रेतुं प्रवृत्तः

गृहे तस्य पत्नी स्नेहशीला पत्युः निरीक्षणे आसीत्। यथार्थनामा गृहिणी सा। गृहमागतं महाराजं दृष्ट्वा सन्तुष्टा। स्नेहशीला बहुसम्भ्रमेण भोजनार्थं सज्जीकृतवती। उदारबुद्धिः महाराजं विशेषातिथिं भावयन् पत्नीसाहाय्येन विशेषोपचारं कृतवान्।

समीचीनं भोजनं भोजयित्वा व्रणस्य औषधोपचारं कृतवान्। महाराजयोग्यं सत्कारम् अपि कृतवान्।

राजाश्वस्य कृते स्वयं जलादिकं पाययित्वा पिण्याकम् अपि दत्तवान्।



राजा तस्य ग्रामीणस्य गृहे दिनचतुष्टयं वासं कृतवान्। व्रणः शान्तः। तदा सन्तुष्टः राजा ग्रामीणस्य कृते तत्पत्न्याः कृते च कृतज्ञतां समर्पयन् उक्तवान्-आर्य, अहं काशीनगरनिवासी। मम गृहं दुर्गस्य अन्तः अस्ति। मम एका पत्नी पुत्रद्वयं च अस्ति। भवान् एकवारं काशीनगरम् आगच्छतु। दुर्गस्य दक्षिणपार्श्वे, उत्तरदिशः द्वारसमीपे स्थितं द्वारपालकं— "महाश्वारोहिणः गृहं कुत्र ?" इति पृच्छतु। सः भवन्तं साक्षात् मम गृहं प्रापयति। यथेष्टं कालं मम अतिथिः भवतु इति।

इतः महाराजस्य प्रस्थानतः पूर्वम् एव राजसैनिकाः विक्षिप्तान् निगृह्य शान्तिं स्थापितवन्तः आसन्। राजा ग्रामतः निर्गत्य स्वसैन्यं मिलितवान्। ततः काशीनगरं गतवान् च। तत्र उत्तरदिशः द्वारस्य रक्षकम् आहूय रहसि उक्तवान्— अये, कश्चित् भवतः समीपम् आगत्य "महाश्वारोहिणः गृहं कुत्र ?" इति पृच्छति चेत् तं गौरवपूर्वकं मम समीपम् आनयतु। एतत् सर्वदा स्मर्तव्यम्" इति।

बहुदिनपर्यन्तं राजा ग्रामीणस्य प्रतीक्षां कृतवान्। किन्तु ग्रामीणः न आगतवान् एव। "येन केनापि प्रकारेण ग्रामीणः आनेतव्यः एव" इति राजा निश्चितवान्। तदर्थं मन्त्रिणः द्वारा तस्य सीमाप्रान्तस्य उपरि नवीनं करं नियोजितवान्। तदानीम् अपि ग्रामीणः न आगतवान्। पुनः किञ्चित्कालं प्रतीक्षां कृत्वा राजा पुनरपि अधिकं करं नियोजितवान्।

एवं द्वित्रिवारं यदा जातं तदा ग्रामजनाः तं उदारबुद्धिं -यः महाराजस्य उपचारं कृतवान्- उक्तवन्तः- "पुनः पुनः नियोज्यमानेन करभारेण



# 'दानपात्रम्'

काशी बहुविशालं सुन्दरं च नगरम् । नगरसमीपे एव प्रसन्नजला गङ्गानदी प्रवहति । एकदा बोधिसत्वः काशीराज्ये जन्म प्राप्तवान् । तत्र सः धर्मेण न्यायेन च राज्यं परिपालयति स्म । सः दयापरः प्रजावत्सलः च आसीत् । तं प्रति प्रजानामपि प्रीतिः गौरवं च आसीत् । तस्य राज्ये सर्वे प्रजाः सुखेन वसन्तिस्म । प्रजाः शान्तिप्रियाः परस्परस्नेहयुक्ताः च आसन् । बोधिसत्वः शूरः धीरः इति विख्यातः । कदाचित् सीमाप्रान्ते केचन विक्षिप्ताः विरोधम् आरब्धवन्तः । एतान् विक्षिप्तान् निग्रहीतुं राजा तत् प्रान्तं गतवान् । युद्धं प्रवृत्तम् । बहु घोरं युद्धम् । दुर्दैववशात् शत्रुपक्षीयः एकः बाणः आगत्य महाराजस्य वक्षःस्थले पतितः । तेन राजा व्रणितः । तदा भीतः राजाश्वः तं राजानं युद्धरङ्गात् दूरम् नीतवान् ।

महाराज रक्षितुम् इच्छन् सः किञ्चित्कालानन्तरं राजसहितः अश्वः एकं ग्रामं प्रविष्टः । तत्र ग्रामीणाः सर्वे एकत्र व्यवहारं चर्चयन्ति स्म ! अकस्मात् खड्गकवचधारिणं योद्धवेषसहितं महाराजं दृष्ट्वा यः कोऽपि शत्रुः अस्मान् हन्तुं आगतः इति मत्वा भयेन सर्वेऽपि पलायिताः । किन्तु तेषु मध्ये उदारबुद्धिःनामकः सज्जनः आसीत् । सः एकः एव ग्रामस्थः धैर्येण तत्र स्थितवान् ।

स्नेहपरः सः श्रान्तस्य महाराजस्य समीपम् आगतवान् । व्रणितं महाराजं दृष्ट्वा तस्य सेवाबुद्धिः जागृता । नखशिखान्तम् एकवारं दृष्टवान् । तं युद्धादागतं ज्ञात्वा पृष्टवान्—"भवान् राजपक्षीयः वा ? विक्षिप्तपक्षीयः वा ?" इति ।

"आर्य ! अहं राजपक्षीयः एव," इति राजा उक्तवान् ।

एतत् श्रुत्वा ग्रामीणः सन्तोषं प्रकटयन्—"तर्हि मम गृहं गच्छामः" इति उक्त्वा, राजानम् आदरसहितं स्वगृहं नीतवान् ।

तदा परमेशस्य द्वितीयः पुत्रः तत्र आगतवान् । "अग्रज ! वेणुविक्रयणम् इदानीं मास्तु । विदारिताः वेणुशलाकाः क्रेतुम् एकः वणिक् सिद्धः अस्ति" इति उक्तवान् । अनन्तरं ते वेणून् विदारितवन्तः । तान् नेतुं वणिक् अपि एकः आगतवान् । तदा तृतीयः पुत्रः ग्रामात् आगतः उत्साहपूर्वकम् उक्तवान्— "श्रमेण सम्पादिताः शलाकाः न्यूनमूल्येन किमर्थं विक्रीणीमः ? शलाकाभिः कण्डोलान् अन्यवस्तूनि च सज्जीकर्तुम् एकः सिद्धः अस्ति । तद्द्वारा तथा कारयामः । अनन्तरं सः एव स्वयं विक्रीय ददाति" इति ।

वेणुभिः कण्डोलाः अन्यवस्तूनि च सिद्धानि । तानि वस्तूनि नेतुम् एकः वणिक् अपि आगतवान् । तावति काले परमेशस्य चतुर्थः पुत्रः तत्र आगत्य उक्तवान्— "एतेषां विक्रयणं वयम् एव कुर्मः चेत् समग्रः लाभः अस्माकम् एव भवति । अहम् एव एतत् कार्यं करोमि" इति ।

अन्ते चत्वारः अपि मिलित्वा युक्तेन मूल्येन सर्ववस्तूनां विक्रयणं कृतवन्तः । एतेन अनुभवेन तैः ज्ञातम्— "वाणिज्यं न तथा कष्टं, यथा वयं चिन्तयामः" इति । अतः वाणिज्यम् आरब्धवन्तः । केषुचित् एव मासेषु वेणुवाणिज्ये लाभं कीर्तिं च संपादितवन्तः । अन्ते एकदा लाभ-विभजनं प्रवृत्तम् । तदा परमेशः आगत्य उक्तवान्— "लाभ-विभजनतः पूर्वं वेणोः मूल्यं पृथक् स्थापयन्तु" इति ।

पुत्राः आश्चर्येण— "वेणोः मूल्यं किम् ? तत्तु निश्शुल्कं प्राप्तम्" इति उक्तवन्तः । तदा परमेशः हसन् उक्तवान्— "कियतः निश्शुल्कं दत्तवान्, सत्यम् । किन्तु पुनरपि वेणुः निश्शुल्कं न लभ्यते । तदा धनं दातव्यम् एव किल ?" इति ।

चत्वारः अपि एतं विचारम् अङ्गीकृतवन्तः । परमेशः तेषां पुरतः एकं रहस्यं न उक्तवान् एव । आरम्भे ज्येष्ठपुत्रस्य कृते यः वेणून् दत्तवान् तस्य किरातस्य कृते परमेशः धनं दत्तवान् आसीत् । एवमेव वणिग्रूपेण आगताः सर्वेऽपि परमेशस्य मित्राणि एव आसन् ।



वयं मृतप्रायाः स्मः । भवदीयं मित्रं काशीनगरे दुर्गप्रदेशे अस्तीति उक्तं किल ? सः महाराजस्य परिचितः भवेत् । एकवारं तत्र गत्वा तं पश्यतु । तस्य साहाय्येन महाराजं पश्यतु । महाराजस्य कृते अस्माकं कष्टं तस्य कृते निवेदयतु । करभारस्य पीडां राजा यथा जानाति तथा व्यवस्थां करोतु" इति ।

ग्रामीणः उक्तवान्— "मित्रेण सह वार्तालापे मम किमपि कष्टं नास्ति । किन्तु रिक्तहस्तः कथं तस्य समीपं गच्छामि ? तस्य एका पत्नी पुत्रद्वयं च अस्ति इति श्रुतवान् । तेषां कृते वस्त्रादिकं नेतव्यं किल ? तस्य पत्न्याः कृते आभरणं किमपि नेतव्यं किल ? भवन्तः सर्वे एतत्सर्वं व्यवस्थापयन्ति चेत् अहं गत्वा वार्तालापं करिष्यामि" इति ।

ग्रामजनाः मिलित्वा उपायनरूपेण दातुम् आभरणानि वस्त्राणि संगृह्य आनीतवन्तः । तानि सर्वाणि ग्रामजन-धारणयोग्यानि सामान्यवस्तूनि एव आसन् । गमनतः पूर्वं ग्रामीणस्य पत्नी भक्ष्याणि, लड्डुकानि शष्कुलीः च सज्जीकृत्य दत्तवती । तत्सर्वं स्वीकृत्य ग्रामीणः काशीनगरं गतवान् ।

कतिचिद्दिनानाम् अनन्तरं सः काशीनगरं प्राप्तवान् । दुर्गस्य उत्तरदिशः द्वारस्य समीपम् आगत्य द्वारपालकम् उक्तवान्— "भद्र ! मया महाश्वारोहिणः समीपं गन्तव्यम् । तदर्थं कः मार्गः ?" इति

तत्क्षणम् एव द्वारपालकः ग्रामीणं नमस्कृत्य सगौरवं महाराजसमीपं नीतवान् ।





# मोगल साम्राज्य पतनम्

महाराष्ट्रं निर्मूलयितुं प्रस्थितेन औरङ्गजेबेन स्वजीवितावधौ षड्विंशतिवर्षाणि 'दखन्' नगरे एव यापनीयानि आपतितानि । राजधान्यां सः न आसीत् इति कृत्वा शासनव्यवहारः अव्यवस्थितः सञ्जातः । अकबर् नामकः पुत्रः पितरं विरुध्य पर्शिया-

देशं गतवान् । अनेन अतीव दुःखितः औरङ्गजेबः १७०७ तमे वत्सरे 'अहनद्' नगरे दिवंगतः ।

तस्य पुत्राणां परस्परकलहः रक्तपातस्य निमित्तं सञ्जातम् । औरङ्गजेबस्य ज्येष्ठपुत्रः अनुजद्वयं मारयित्वा 'बहादुरषा' नाम्नि सिंहासनम् आक्रान्तवान् । १७१२ तमे वत्सरे तस्य मरणस्य अनन्तरं तदीयः ज्येष्ठपुत्रः 'जहांगीर षा' स्वसहोदरत्रयं मारयित्वा सिंहासनम् आरूढवान् ।





पुनः एकवर्षावधौ एतदीयः मातुलपुत्रः एतं मारयित्वा सिंहासने उपविष्टवान् । तदनन्तरं दुष्टसहोदरत्वेन ख्याताः सैयद्सहोदराः अधिकारं वशीकृतवन्तः । ततः स्वैरं व्यवहरन्तः ते एकस्य अनन्तरम् एकं सिंहासने आरोपयन्तः त्रीन् महाराजान् मारितवन्तः ।

बोधितवन्तः— "युवराज ! भवतः विषये महाराजेन अन्यायः अनुष्ठितः । भवतः दायभूतम् अर्धराज्यं विनाकारणम् अनागरिकस्य कृते दत्तवान् । अतः भवता इदानीं महाराजः एतद्विषये प्रष्टव्यः । इदानीम् अपि समयः न अतिक्रान्तः" इति । एतत्सर्वं अन्याय्यम् इति मन्यमानः राजकुमारः पितृसमीपं गतवान् । राज्यदानविषये स्वकीयम् आक्षेपं निवेदितवान् ।

एतत्सर्वं श्रुत्वा राजा हसन् उक्तवान्— "पुत्र ! भवतः अयं विचारः स्वबुद्धिस्फुरितः न । अतः मत्समीपे यथा उक्तं तथैव राजसभायाम् अपि वदतु । तदानीम् एव समाधानकरम् उत्तरं वदामि" इति ।

अपरस्मिन् दिने राजकुमारः राजसभायां पृष्टवान्— "ग्रामीणाय दत्तस्य आदरोपचारस्य विषये मम आक्षेपः नास्ति । किन्तु अर्धराज्यं किमर्थं दत्तम् इति अहं न ज्ञातवान् । एतद्विषये प्रष्टुं मम अधिकारः अस्तीति अहं भावयामि" इति । तदा राजा उक्तवान्— "पुत्र ! भवतः आक्षेपः अयुक्तः इति अहं न वदामि । कदाचित् अयं ग्रामीणः मम प्राणरक्षां कृतवान् आसीत्" इति । अनन्तरं सीमाप्रान्ते प्रवृत्तस्य विरोधस्य, स्वकीय क्षतस्य, ग्रामीणेन कृतस्य उपचारस्य च समग्रं विवरणं दत्तवान् । अन्ते एवम् उक्तवान् — "अपात्रदानं यथा दोषावहं तथैव योग्याय अदानम् अपि दोषाय एव । मां राजानम् अजानानः ग्रामीणः प्रतिफलापेक्षां विना मनःपूर्वकं मम सेवां कृतवान् । मयि आह्वाने दत्तेऽपि, प्रतिफलनिरपेक्षी सः अत्र न आगतवान् एव । ग्रामजनानाम् अभ्युदयार्थम् इदानीम् आगतवान् अस्ति । तदपि स्वशक्त्यनुसारम् अमूल्यैः उपायनैः सह ! परोपकारिणि अस्मिन् स्वार्थस्य लेशः अपि नास्ति । इदानीं वदतु, मदीयाय अर्धराज्याय एनम् अतिरिच्य अर्हः अन्यः कः ?"

महाराजस्य वचनं श्रुत्वा मन्त्रिमाण्डलिकादयः सर्वे लज्जिताः । राजकुमारः स्वकीयं दोषं ज्ञातवान् । सः पितरं क्षमां याचितवान् ।

तदारभ्य स्वजीवितान्तं यावत्, राजा तं ग्रामीणम् आदरभावेन पश्यन् आसीत् ।



ग्रामीणं दृष्ट्वा राजा अत्यन्तं सन्तुष्टः । ग्रामीणः महाराजं दृष्ट्वा आश्चर्यचकितः जातः । महाराजः तस्य कृते अर्घ्यपाद्यादिकं दत्तवान् । परस्परक्षेमसमाचारं पृष्टवन्तः । ग्रामीणः आनीतानि सर्वाणि वस्तूनि महाराजस्य कृते दत्तवान् । महाराजः अत्यन्तसन्तोषेण ग्रामीणेन आनीतानि खाद्यादीनि स्वीकृत्य स्वपत्न्यै, पुत्रेभ्यः, स्व-मन्त्रिमाण्डलिकेभ्यः च दत्तवान् । स्वयम् अपि स्वीकृतवान् । ग्रामीणेन आनीतानि सामान्यवस्त्राणि पत्नीपुत्रेभ्यः दत्तवान् । अनन्तरम् ग्रामीणस्य कृते अतिथियोग्यानि पट्टवस्त्राणि धारणार्थं दत्वा, भक्ष्यभोज्यसहितं मिष्टान्नं भोजितवान् । इदं सर्वं परिवारजनाः आश्चर्येण पश्यन्ति स्म । राजा तस्य आगमनस्य कारणं पृष्टवान् । स्वग्रामस्य उपरि नियोजितं करभारं दूरीकारयितुम् एव एषः आगतवान् इति ज्ञात्वा राजा, समग्रं करभारं न्यूनीकर्तुं स्वमन्त्रिणम् आदिष्टवान् । अनन्तरं राजा एकां सभाम् आयोजितवान् । तस्यां सभायां मन्त्रिमाण्डलिक-जनानां समक्षं, ग्रामीणम् अर्धराज्यस्य आधिपत्ये नियोजितवान् ।

"यःकश्चित् ग्रामीणः विनायासं राजसम्मानं प्राप्तवान्" इत्ययं विषयः मन्त्रिजनेभ्यः न रोचते स्म । ग्रामीणस्य कृते अर्धराज्यदानं तु तेषां दृष्ट्या विवेकरहितं कार्यम् । ग्रामीणः राज्यं न इच्छति चेत् अपि निर्बन्धपूर्वकं राज्यदानं भावातिरेकं विना किम् अन्यत् ?

किन्तु महाराजं विरुध्य वक्तुं कस्यापि धैर्यं नास्ति । अतः सर्वे राजकुमारसमीपं गत्वा





अन्ते 'मोहम्मद् षा' सिंहासनम् आरूढवान्। सैयद्सहोदरान् मारितवान् च । किन्तु एतावति एव काले दिल्लीनगरस्य अशान्तिम्, अव्यवस्थितपरिस्थितिं च पर्शिया महाराजः 'नदिरषा' ज्ञातवान् । सः महत्या सेनया सह दिल्लीं वशीकर्तुं भारतस्य उपरि आक्रमणं कृतवान् ।

'नादिरषा' महोदयं निरोद्धुं पर्याप्तं सेनाबलं, धैर्यसाहसादिकं वा 'मोहम्मद षा' महोदयस्य न आसीत् । सः राज-पुत्राणां साहाय्यं न याचितवान् अपि । अतः नादिर षा विनायासं दिल्लीं वशीकृतवान् । अनन्योपायः मोहम्मद षा, नादिर षा महोदयं स्वागतीकृतवान् ।





नादिर षा दिल्लीनगरे सुखभोगान् अनुभवति । तदीयाः सैनिकाः तु नगरं लुण्ठितवन्तः । कदाचित् "नादिर षा मृतः" इति किंवदन्ती-प्रसृता । तदा दिल्लीपौराः महता सन्तोषेण पर्शियासैनिकान् मारयितुम् आरब्धवन्तः ।

# बधिरता एव गरीयसी

एकस्मिन् ग्रामे एकः बधिरः धनिकः आसीत्। सः बधिरः चेदपि लेखितुं पठितुं च जानाति स्म। अतः एव कुसीदव्यवहारेण यथेष्टं सम्पत्तिं सम्पादितवान् आसीत्।

एकदा तं ग्रामम् एकः सन्यासी आगतवान्। सः आशुचिकित्सायां समर्थः। बहूनां जनानां दीर्घकालिकरोगाः अपि सन्यासिनः भस्म-रसायनादिभिः शान्ताः आसन्। धनिकः एतं विषयं ज्ञातवान्। आत्मनः बधिरतां निवारयितुं चिन्तितवान्। सन्यासिनं दृष्ट्वा स्वकीयां परिस्थितिं समग्रां निवेदितवान्।

"बधिरताकारणात् भवतः का हानिः? भवान् वृद्धिव्यवहारेण यथेष्टं सम्पादितवान् किल? अतः बधिरतां विस्मरतु" इति उक्तवान् सन्यासी।

धनिकः न अङ्गीकृतवान्। सः उक्तवान्— "धनार्थम् आगताः केचन कोपेन किमपि किमपि वदन्ति। अन्ये केचन वक्रदृष्ट्या पश्यन्ति। तैः उच्यमानं सर्वं श्रोतव्यं मया" इति।

सन्यासी धनिकाय द्रवं एकं दत्वा उक्तवान्— "इदं च वनमूलिकानिर्मितं कर्णामृतम्। अस्य उपयोगेन भवान् एकमासपर्यन्तं श्रवणशक्तिं प्राप्नोति। किन्तु आगतां शक्तिं ततःपूर्वं निवारयितुं तु औषधं नास्ति" इति।

धनिकः तद्दिने सायंकाले एव सन्यासिनः समीपम् आगत्य दीनतया उक्तवान्— "भवदीयं कर्णामृतम् अद्भुतम् एव। किन्तु मत्समीपम् आगताः माम् इदानीम् अपि बधिरम् एव चिन्तयन्ति। तैः उच्यमानं वचनं श्रोतुम् एव न शक्नोमि। एतदपेक्षया बधिरता एव गरीयसी। औषधप्रभावः एकमासपर्यन्तं किल? तावत्पर्यन्तम् अहं भवतः समीपे एव निवसामि" इति।

सन्यासी एकमासपर्यन्तम् आत्मना सह स्थातुम् अनुज्ञां दत्तवान्





सुप्रसिद्ध-कोहिनूर-वज्रार्थं नादिर षा, मोगलराजभवनानि सर्वाणि अन्विष्टवान्। "अमूल्यं एतत् वज्रं मोहम्मद षा स्वीये उष्णीषे गोपितवान् अस्ति" इति वार्ता एकः मोगल अधिकारी नादिर षा महोदयाय सूचितवान्।

ज्ञातरहस्यः नादिर षा मोहम्मद षा समीपे— "मित्र ! मैत्रीसंस्मरणार्थम् अस्माकम् उष्णीषयोः विनिमयं कुर्मः वा ? इति पृच्छन् स्वकीयम् उष्णीषं मोहम्मद षा महोदयाय दत्तवान् । तथैव तस्य उष्णीषं स्वीकृत्य स्वयं धृतवान् । एवंरीत्या कोहिनूरवज्रं नादिर षा महोदयस्य हस्तगतं जातम् ।





दिल्लीनगरं रक्तसागरे निमज्जयन् नादिर षा मोगलसाम्राज्यं प्रति प्राणापहारकं प्रहारम् एव दत्तवान् । अनन्तरं काले फ्रेञ्चजनाः आंग्लवणिजः, च भारतदेशस्य ऐश्वर्येण आकृष्टाः, क्रमशः आगन्तु समारब्धवन्तः ।

एतां वार्तां श्रुत्वा नादिर शा स्व सैनिकान् प्रतिहिंसार्थं प्रतीकारार्थं च प्रोत्साहितवान् । ते सैनिकाः उच्छृङ्खलाः गृहाणि आपणान् च लुण्ठितवन्तः, नाशितवन्तः च । एकस्मिन् एव दिने पुरुषस्त्री भेदं विना त्रिसहस्रजनान् मारितवन्तः ।





पर्शिया सैनिकाः भवनानि अपि दाहितवन्तः। रमणीयाः प्रासादाः भस्मावशेषतां गताः । पुरतः दृश्यमानाः सर्वः अपि मारिताः एव । विशालं दिल्लीनगरम् इदानीं श्मशान सदृशं दृश्यते ।

अपरिमित धन-सुवर्ण-मणि-रत्नादिभिः सह जगत् प्रसिद्धं मयूरसिंहासनम् अपि नादिर शा नीतवान् । एतद्व्यतिरिच्य सहस्रशः गजान् सप्तसहस्र-सङ्ख्याकान् अश्वान् दशसहस्र-मितान् उष्ट्रान्, विविधवृत्तिनिपुणान् शिल्पिनः च पर्शियां नीतवान् नादिर शा ।





# सूक्ष्मग्राही

पूर्वसमुद्रतीरे पुरन्दरनगरं नाम वाणिज्यकेन्द्रम् आसीत् । तस्मिन् पुरन्दरनगरे चन्द्रनागः इति वणिक् आसीत् । सः पूर्वसमुद्रे द्वीपेषु वणिज्यं करोति स्म । सः महान् व्यापारी आसीत् । स्वबुद्धिकौशल्यबलेन एव बहु धनिकः जातः । तस्य समीपे अनेके कर्मकराः कार्यं कुर्वन्ति स्म । सः यं कमपि पुरुषं कार्यार्थं स्वीकरणात् पूर्वं तस्य चातुर्यं सम्यक् परीक्ष्य एव स्वीकरोतिस्म । वस्तूनाम् आयातनिर्यातकार्ये साहाय्यार्थं तस्य एकः समर्थः साहाय्यकः अपेक्षितः आसीत् । एतं विषयं सः स्वमित्राणां वणिजां समीपे उक्तवान् । तेषु एकः स्नेहितः चन्द्रनागसमीपं युवकद्वयं प्रेषितवान् । सूचितवान् च— "एतौ उभौ अपि विश्वासपात्रे एव । अपेक्षितम् एकं स्वीकरोतु" इति । तयोः एकस्य नाम विशाखः, अपरस्य नाम आनन्दः ।

चन्द्रनागः प्रथमम् आनन्दं समुद्रतीरे स्थितं स्व-भाण्डागारं नीतवान् । तत्र अनेकाः काष्ठपेटिकाः इतस्ततः पतिताः आसन् । चन्द्रनागः आनन्दस्य कृते ताः पेटिकाः प्रदर्शयन् उक्तवान्— "पश्यतु, एतासु पेटिकासु रजत-कांस्यादि-निर्मितानि अन्यान्यवस्तूनि सन्ति । एतानि वस्तूनि अहं चन्द्रपुरवणिजा क्रीतवान् । एतत्सर्वं यावच्छीघ्रं नौकाद्वारा पूर्वराज्येभ्यः प्रेषणीयम् अस्ति । सद्यःकाले एताः पेटिकाः भाण्डागारे व्यवस्थितं स्थापनीयाः" इति ।

अनन्तरं चन्द्रनागः समीपस्थितान् चतुरः पुरुषान् आहूतवान् । तान् प्रदर्शयन् आनन्दम् उक्तवान्— "एते चन्द्रपुरवणिजः जनाः । एते एव एताः पेटिकाः आनीतवन्तः । एते समीपे दृश्यमाने प्रकोष्ठे पेटिकाः स्थापयन्ति । प्रकोष्ठे च अस्मदीयः एकः भवति । सः एताः पेटिकाः सुव्यवस्थितं स्थापयति । भवान् तु तत्रैव स्थित्वा पेटिकानां गणनां स्वीकृत्य लिखित्वा, मम समीपं प्रेषयतु" इति । ततः निर्गतवान् च ।

आनन्दः चन्द्रनागवचनानुसारं स्वकर्तव्यं कृ-



# दोहदम्

रमापतिः एकः लिपिकः । सः एकस्मिन् कार्यालये कार्यं करोति स्म । तस्य पत्नी शालिनी । शालिन्यां रमापतेः प्रेम अधिकम् । यतः सा बुद्धिमती गुणवती च आसीत् । सा पत्युः इच्छानुसारं कुटुम्बं प्रचालयति स्म । अल्पव्ययेन एव ते सुखेन कालं यापयन्ति स्म । गच्छति काले शालिनी गर्भवती जाता । तत् श्रुत्वा सः बहु आनन्दितः । आगामि शिशोः कृते मम अल्पवेतनेन किं कर्तुं शक्यते । शिशूनां आवश्यकवस्तूनि बहूनि भवन्ति । तत् सर्वं आनेतुं मयि शक्तिः अस्ति वा ? किं करोमि ? इति चिन्तितः भवति । एकस्मिन् दिने कार्यालये बहु कार्यम् आसीत् । तत्सर्वं समाप्य सायंकाले सः अन्यकार्यकर्तृभिः सह गृहं प्रस्थितः । सः अतीव श्रान्तः आसीत् । तस्य कृते विश्रान्तेः आवश्यकता आसीत् । यदा गृहसमीपम् आगतवान् तदा द्वारे पत्नीं दृष्ट्वा तस्य मनः खिन्नम् अभवत् । तं दृष्ट्वा तस्याः मुखम् अपि म्लानम् अभवत् ।

रिक्तहस्तेन आगतवन्तं पतिं दृष्ट्वा सा पृष्टवती "अद्यापि उत्तमं पनसफलम् आपणे न लब्धं वा ?" इति

"यदि लभ्यते, न आनयामि वा ? 'श्वः उत्तमं फलं लभ्यते' इति आपणिकः उक्तवान् । श्वः अवश्यम् आनयामि" इति उक्त्वा रमापतिः गृहस्य अन्तः गतवान् ।

रमापतिः न धनिकः । अत एव मितव्ययेन यथाकथञ्चित् जीवनं यापयति स्म । तस्य पत्नी अतीव गुणवती । सा कदापि तदिदम् आवश्यकम् इति उपरोधं न कृतवती । इदानीं सा आसन्न-नवमासा । अद्यत्वे पनसफलं खादितुं तस्याः मनः बहु इच्छति स्म ।

इच्छायाः गोपनं क्रियते चेत् शिशुः रोगग्रस्तः जनिष्यते इति हि विश्वासः अस्ति । अत एव सङ्कोचेनैव सा इच्छां प्रकटितवती ।

किन्तु पनसफलस्य मूल्यं न्यूनातिन्यूनं षट्

चन्द्रपुरवणिजः जनाः केवलं अभिनयं कुर्वन्ति वा ? अत्र किमपि रहस्यं अस्तीति प्रतिभाति । पेटिकासु रजत-कांस्यादीनि वस्तूनि सन्ति इति उक्तम् । तत् असत्यं स्यात् । अयं विषयः चन्द्रनागस्य कृते अवश्यं वक्तव्यः इति निश्चितवान्

कार्यसमाप्तेः अनन्तरं विशाखः चन्द्रनागसमीपं गत्वा उक्तवान्- "श्रीमन् ! पेटिकाः दशाधिकशतं सन्ति । मम तु एकः संशयः । चन्द्रपुरवणिजा सह भवतः सम्बन्धः बहुकालतः स्यात् । सः विश्वासार्हः अपि स्यात् । तदहं न जानामि । किन्तु इदानीं तस्य प्रामाणिकतायां मम सन्देहः अस्ति । वस्तुस्थितिकथनं मम कर्तव्यम्..."

"किमर्थं सन्देहः आगतः ?" चन्द्रनागः पृष्टवान् ।

"तासु पेटिकासु रजतकांस्यादिनिर्मितानि वस्तूनि सन्ति इति भवान् उक्तवान् । किन्तु अत्र वञ्चना स्यात् इति मम मतिः । पेटिकाः आनीतवन्तः चत्वारः पुरुषाः तदीयाः किल ? ते च पेटिकायाः उन्नयने श्रमम् अभिनयन्ति । अन्यथा अस्मदीयः पुरुषः कथम् एकाकी विनायासं पेटिकाः उन्नेतुं समर्थः ? पेटिकासु लोहवस्तूनि न सन्ति । बहुशः तृणसदृशानि लघुवस्तूनि स्युः । अतः इदानीम् एव भवता भाण्डागारं गत्वा पेटिकाः परीक्षणीयाः । पुनः यदाकदाचित् वञ्चना ज्ञाता चेदपि सः वणिक् निराकुर्यात् किल ?" इति ।

एतत्वचनं श्रुत्वा चन्द्रनागः अतीव सन्तुष्टः । सः विशाखम् अभिनन्दन् उक्तवान्— "मित्र ! भवान् सूक्ष्मग्राही । ताः पेटिकाः पेटिकावाहकाः चत्वारः अपि अस्मदीयाः एव । उद्योगार्थम् आगतयोः भवतोः बुद्धिं चतुरतां च परीक्षितुं मया एवं कृतम् आसीत् । अत्र भवान् उत्तीर्णः । व्यापारे कार्यदक्षता बुद्धिचातुर्यम् एतत् द्वयमपि अपेक्षितम् । अन्यथा सञ्चितं धनं सर्वं क्षणेनैव विनश्यति । अद्य आरभ्य एव भवान् मत्समीपे उद्योगं करोतु । अहं मम मित्रम् इदानीम् एव सूचयामि" इति ।

अस्यां परीक्षायां दैववशात् प्राप्तं विजयं स्मृत्वा विशाखः आश्चर्यचकितः सन्तुष्टः च ।



तवान् । ते चत्वारः महता श्रमेण पेटिकाः आनयन्ति स्म । प्रकोष्ठस्थः चन्द्रनागपक्षीयः पुरुषः विनायासं ताः उन्नीय एकस्याः उपरि एकां स्थापयति स्म ।

आनन्दः पेटिकाः गणयन् एतत्सर्वं परिशीलयति स्म । कार्यसमाप्तेः अनन्तरम् आनन्दः चन्द्रनागसमीपं गत्वा उक्तवान्— "सर्वाः पेटिकाः सुव्यवस्थितं स्थापिताः । आहत्य दशाधिकशतं पेटिकाः सन्ति" इति । गणनाचीटिकां च दत्तवान् । चन्द्रनागः चीटिकाम् एकवारं परिशील्य उक्तवान्— "अस्तु कार्यार्थं स्वीकरणीयः चेत् दिनद्वयानन्तरं भवन्तं सूचयामि" इति । आनन्दः ततःनिर्गतः ।

अपरस्मिन् दिने चन्द्रनागः विशाखम् अन्यत् भाण्डागारं नीतवान् । तत्र अव्यवस्थितं स्थिताः पेटिकाः प्रदर्श्य आनन्दाय यथा उक्तं तथैव उक्त्वा निर्गतः । तत्रापि पेटिकाः आनीतवन्तः चत्वारः कर्मकराः प्रकोष्ठे च चन्द्रनागीयः पुरुषः च आसन् ।

भाण्डागारे पेटिकाः गणयतः विशाखस्य एकः सन्देहः समुत्पन्नः । चतुर्भिः पुरुषैः महता श्रमेण आनीयमानां पेटिकां चन्द्रनागीयपुरुषः निरायासम् उन्नीय एकस्याः उपरि अपरां स्थापयति । सः बलाढ्यः भीमकायः अपि न । एतत् सर्वं विशाखः सूक्ष्मं परिशीलयति स्म । यां पेटिकां महताश्रमेण चत्वारः आनयन्ति तां पेटिकां विनायासेन एकः एव स्थापयति किल ? तर्हि पेटिकासु भारवस्तु किमपि न स्यात् । एते





रुप्यकाणि भवति । मासस्य अन्तिमदिनानि ! अत एव रमापतेः समीपे धनं न आसीत् । ऋणयाचनमपि दुष्करम् । यतः तस्य सहोद्योगिनां परिस्थितिः अपि एवमेव । अत एव सः प्रतिदिनं यत्किमपि कारणं वदति स्म । किन्तु अद्यापि पनसफलं न आनीतवान् ।

एकस्य गृहस्य अङ्गणे फलपूर्णं पनसवृक्षं सः दृष्टवान् आसीत् । इदानीं तदेव चित्रं स्मरणे आगतम् । सः चिन्तितवान् "तस्मात् गृहात् एकं फलं चौर्येण आनीय ददामि । तस्याः इच्छां सफलीकरोमि च" इति ।

रमापतिः किञ्चित् कालम् चिन्तयन् आसीत् । पत्नी तु निद्रां करोति स्म । अतः रमापतिः एकं गोणीस्यूतं गृहीत्वा निःशब्दं गृहात् बहिः गतवान् ।

यदा सः तत् गृहम् आगतवान् तदा सामान्यतः मध्यरात्रः । रमापतिः सावधानम् अङ्गणस्य भित्तिम् आरुह्य अधः निपत्य पनसवृक्षस्य समीपं गतवान् । तस्मिन् वृक्षे बहूनि फलानि अधः एव आसन् । सः फलानि दृष्टवान् । तथैव मनसि चिन्तितवान्-"इतः पूर्वं यदा कदापि चौर्यं न कृतवान् । अतः इदानीं किं करोमि ? न न, अहं चोरः न भवामि" इति चिन्तयित्वा ततः गन्तुम् उद्युक्तः । किन्तु प्रियपत्न्याः शालिन्याः म्लानमुखं स्मरणे आगतम् । "तस्याः इमाम् एकां लघु आशाम् अपि पूरयितुं न शक्नोमि वा ? किं तादृश-कठिनहृदयी वा अहम् ? न न, कदापि न ।" इति चिन्तयित्वा धैर्येण तेषु परिपक्वम् एकं फलम् अवचित्य, स्वकीये स्यूते स्थापितवान् । "यदि अङ्गणम् अतिक्रमामि तदा सर्वं सुसम्पन्नम्" इति चिन्तितवान् ।

गोणीस्यूतः अतीव भारः आसीत् । अतः स्यूतं गृहीत्वा भित्तिम् उत्पतितुं रमापतिः न शक्नोति स्म । "पुरोद्वारतः एव गच्छामि" इति चिन्तयित्वा सावधानं सः बहिः आगतवान् ।

तत्र तदा सः एकं विचित्रं दृष्टवान् । तत्र कश्चित् पुरुषः निबिडतया प्रवर्धितानां वृक्षाणां मध्ये उपविष्टः आसीत् । सः अन्धकारे एव एकं गर्तं खनति स्म । तस्य समीपे एकस्मिन् स्यूते किमपि वस्तु आसीत् ।

अभवत् । किन्तु तस्मिन् समये पत्नी आगत्य "रात्रौ तत्र भवान् किं करोति ?" इति पृष्टवती ।

पत्न्याः आगमनं ज्ञात्वा पतिः भयेन गोणीं गर्ते पातयित्वा पत्नीम् उक्तवान् "अहं आगच्छामि" इति । अनन्तरं रमापतिं प्रति "अहं गच्छामि, भवान् गर्ते मृत्तिकां पूरयित्वा तूष्णीं गृहं गच्छतु" इति मन्दस्वरेण उक्त्वा द्वारं पिधाय अन्तः गतवान् ।

रमापतिः तस्मिन् गर्ते मृत्तिकां पूरयित्वा स्वकीयं स्यूतम् उद्धृत्य मुख्यद्वारम् अपि अतिक्रम्य मार्गम् आगतवान् ।

मार्गे नगररक्षकाः तं दृष्ट्वा "कोऽत्र? तिष्ठतु" इति उक्तवन्तः ।

रात्रौ रमापतिः एकः एव आसीत् । चोरः इति तेषां संशयः समुत्पन्नः । "अर्धरात्रे एकः एव कुत्र गच्छति ? स्यूते किम् अस्ति ? किमपि वस्तु चोरितं वा ?" इति पृष्टवन्तः ।

"किं, चौर्यम् ! न हि न हि ।" अहं न चोरः । मम पत्न्याः कृते पनसफलं नयन् अस्मि । विलम्बः अभवत्, तावदेव" इति रमापतिः उक्तवान् ।

"अहो ! भवतः वचने विश्वासः कर्तव्यः ।" इति विहस्य, एकः दण्डेन स्यूतं आहतवान् । तदा तस्मिन् स्यूते स्थितः मार्जालः "म्याव्" इति क्रन्दनम् अकरोत् । शब्दं श्रुत्वा रमापतिः व्याकुलः अभवत् । तर्हि सः यजमानः पत्न्याः भयेन मम स्यूतं गर्ते पातितवान् । अहमपि एतं स्यूतं मदीयम् इति आनीतवान् । तर्हि मार्जालः



नैव मृतः । केवलं आहाराभावेन निःशक्तया तथा पतितः इति मन्ये ।

"रे रे । भवतः पत्नी मार्जालम् एव पनसफलम् इति व्यवहरति वा ? भवान् कश्चित् मान्त्रिकः । मायया विद्यया किमपि कर्तुं श्मशानं गच्छन् अस्ति । प्रातःकालः भवतु भवतः निजरूपं बहिः प्रकाशितं भवति । इदानीं कारागृहं गच्छतु" इति उक्त्वा ते बलात्कारेण तं नीत्वा कारागृहे स्थापितवन्तः ।

प्रातः कालः अभवत् । आरक्षक-प्रमुखः आगतवान् । तदा भटाः तस्य समीपम् आगत्य— "रात्रौ एकः अस्माभिः बन्धितः । सः चोरः वा मायावी वा इति अस्माकं संशयः अस्ति" । इति उक्त्वा अधिकारिणं रमापतेः



उक्तवान्। "भवती तत्रापि मार्जालं नयति चेत् भवत्याः विचित्रं मार्जाल-प्रेम दृष्ट्वा सर्वे उपहासं कुर्वन्ति। अत्रैव त्यक्त्वा गच्छतु" इति।

सा किञ्चित् चिन्तयित्वा उक्तवती। "भवता यदुक्तं तत् सत्यम्। अपि च तत्र मम प्रीतिपात्रस्य मार्जालस्य उपरि दृष्टिपातः अपि भवेत्। अतः अत्रैव त्यक्त्वा गच्छामि। किन्तु मार्जालः जागरूकतया द्रष्टव्यः। अन्नं यथाकालं दातव्यम्। अन्नेन सह घृतमपि देयम्। मम आगमनसमये मार्जालः यदि कृशः भविष्यति, तदा प्रायश्चित्तरूपेण भवतः अपि एक सप्ताहम् उपवासः।

अनन्तरं मम निन्दा मास्तु। एकं मुख्यं विषयं वदामि। मार्जालस्य भोजनपात्रं सम्यक् क्षालनीयम्। क्षालनं विना पुनः पुनः तस्मिन् एव दीयते चेत् सः न खादति। आहारं विना मरणमपि प्राप्नुयात्" इति बहु उक्त्वा गतवती।

किन्तु मार्जालः तस्याः गमनानन्तरं किमपि न अखादत्। स्वस्वामिनीं स्मृत्वा, हृदयविद्रावकं क्रन्दनम् अकरोत्। ताम् अन्विष्य गृहे सर्वत्र तेन अटितम्। अन्ते अन्नं क्षीरं सर्वं त्यक्त्वा एकत्र कोणे सुप्तम्। तस्याः आगमन-समये सः शवप्रायः अभवत्। पत्नी आगत्य किं वदेत् इति भीत्या पतिः मार्जालं एकस्याः गोण्याः अन्तः निवेश्य अट्टे स्थापितवान्।

तस्य पत्नी "कुत्र मम प्रिय मार्जालः?" इति पृच्छन्ती एव आगतवती। सर्वत्र गृहे अन्वेष्टुम् आरब्धवती च।

"मार्जालः गतः!" इति यदि वदामि इयं मां बहु पीडयति, किं वदामि? इति चिन्तयन् एव पतिः एवम् उक्तवान्, प्रिये— "भवत्याः गमनानन्तरं मार्जालः भवतीम् अन्विष्य अन्विष्य कुत्रापि अगच्छत्। इदानीं भवती आगतवती। सः अपि आगच्छेत्। चिन्ता मास्तु।" इति उक्तवान्।

सा मार्जालस्य चिन्तया एव भोजनम् अपि त्यक्त्वा रुदती सुप्ता आसीत्। सा यदा निद्राम् आपन्ना तदा यजमानः मार्जालं गर्ते निखातुम् अट्टात् गोणीम् आनीतवान्।

रमापतेः साहाय्येन शीघ्रं गर्तः सिद्धः

तदा रमापतिः स्वयमपि चोरः इति विस्मृत्य "कः भवान् ? किं करोति अत्र ?" इति सधैर्यं पृष्टवान् ।

पुरुषः तं प्रश्नं श्रुत्वा भीत्या खनित्रम् अधः पातयित्वा मन्दस्वरेण उक्तवान् "रे रे, शनैः वदतु । मम पत्नी यदि आगच्छति तर्हि बहुकष्टं भवति" इति । अनन्तरम् आतङ्केन पिहिते द्वारे दृष्टिं प्रसारितवान् ।

सः एव गृहस्य यजमानः इति रमापतिः ज्ञातवान् । स्वकीयम् अपराधं ज्ञात्वा भीत्या कम्पमानः सः गोणीस्यूतं पुरतः स्थापयित्वा उक्तवान् "क्षम्यतां भोः । मम पत्नी गर्भिणी पनसफलम् इच्छति । दापयितुं धनं नास्ति । अतः चौर्यं कृतवान्" इति ।

यजमानः शिरः किञ्चित् अधः नमयन् रमापतिं दृष्ट्वा उक्तवान् "पनसफलं वा ? एकं किम् ? दश एव स्वीकरोतु । चिन्ता नास्ति । किन्तु खननं कर्तुं मम किञ्चित् साहाय्यं करोतु । अस्मिन् स्यूते एकः मृतः मार्जालः अस्ति । मृतं मार्जालं गर्ते निखातुम् आगतवान्" इति ।

रमापतिः विषयं ज्ञात्वा मनसि एव "अहम् उज्जीवितः" इति चिन्तयित्वा खननं कर्तुम् आरब्धवान् । यजमानः मन्दस्वरेण तस्य मार्जालस्य कथाम् उक्तवान् ।

सः मार्जालः तस्य पत्न्याः परम-प्रेमास्पदम् । मार्जालः सर्वदा तया सहैव वसति स्म । तस्याः मार्जाल-प्रेम सर्वाः प्रतिवेशिन्यः उपहसन्ति स्म । दिनचतुष्टयात् पूर्वं सा विवाहार्थं बन्धूनां गृहं गतवती । तदा "मार्जालम् अपि नयामि" इति बहु आग्रहं कृतवती । तदा पतिः



समीपम् एव नीतवन्तः ।

रमापतिः अधिकारिणं दृष्ट्वा आश्चर्यचकितः ।

रात्रौ पत्न्याः विषये बहु भयं यः प्रकटितवान् सः एव अत्र अधिकारी !

रमापतिं मार्जालं च दृष्ट्वा अधिकारी सर्वम् अवगतवान् । मृतः इति चिन्तितः मार्जालः जीवितः इति ज्ञात्वा सः बहु सन्तुष्टः अभवत् । "इदानीं भयं नास्ति । मार्जालं जीवितं दृष्ट्वा पत्नी तृप्ता भवति ।" इति सः आनन्दम् अनुभूतवान् ।

सः भटान् दृष्ट्वा कोपेन उक्तवान् । "रे मूर्खाः । एषः मायावी वा ? अहो ! सत्पात्रे भवतां संशयः । एषः मम चिरपरिचितः । आढ्यः । भवतां मुसलाग्रबुद्धीनां सम्मार्जनी-बहुमानं दातव्यम् । गच्छन्तु बहिः । भवतां मुखदर्शनम् अपि पापकरम्" इति तान् प्रेषितवान् । रमापतिं च आहूय, "अपराधः क्षन्तव्यः । भटाः बहु अविवेकं कृतवन्तः । अन्यथा मा चिन्तयतु । भवान् अस्माकं मार्जालस्य प्राणदाता । भवतः पनसफलम् अहमेव नष्टं कृतवान् । अनन्तरं तदपि ददामि । इदानीम् एतत् स्वीकरोतु" इति बहु आग्रहं कृत्वा तस्य कृते विंशति-रुप्यकाणि दत्तवान् ।

रमापतिः बहुसन्तोषेण आपणं गत्वा उत्तमम् एकं पनसफलं क्रीत्वा शीघ्रं शीघ्रं गृहम् आगतवान् ।

सः गृहस्य समीपम् आगतवान् । द्वारे प्रसविका वेङ्कम्मा आसीत् । रमापतिं दृष्ट्वा "भवान् रात्रौ कुत्र गतवान्"? इति पृष्टवती ।

रमापतिः परिस्थितिं ज्ञात्वा किं-कर्तव्यता-मूढः अभवत् । "कुत्रापि न गतवान् । पनसफलम् आनेतुम्" इति कथनसमये एव वेङ्कम्मा हसित्वा उक्तवती " पत्नी पृष्टवती वा ? इदानीं मास्तु । भवतः पनसफल-सदृशः पुत्रः अभवत् । शिशुः सुन्दरः पुष्टः अस्ति । पत्नी अपि स्वस्था । प्रतिवेशिनी आगत्य माम् आहूतवती" इति । तस्याः वचनं शिशोः रोदनं च श्रुत्वा रमापतेः रोमाञ्चः अभवत् ।





"प्रतिदिनम् एकैकां घुटिकां स्वीकरोतु" इत्यपि सूचितवान् ।

परस्मिन् दिने सोमः एकां घुटिकां सेवितवान् । कण्ठे तापः जिह्वायां ज्वलनं च उत्पन्नम् । तद् दिने सः किमपि खादितुं समर्थः न अभवत् । तथापि तस्य बुभुक्षा न जाता । यतः घुटिका आहारगुणयुक्ता आसीत् । अन्यपीडा तु न आसीत् । परदिने जिह्वातापः अपि न्यून इव अनुभूतः । किन्तु यदा घुटिका स्वीकृता तदा पुनरपि जिह्वा ज्वलितुम् आरब्धा । तद्दिने अपि किमपि न खादितवान् । असन्तृप्तेः एतत्कारणे सत्यपि सर्वाः घुटिकाः स्वीकरणीयाः इति निश्चितवान् । यतः बुभुक्षा पीडा तु न आसीत् किल ?

तस्मिन् दिने रात्रौ सोमस्य गृहं कश्चित् वामनः पथिकः आगतवान् । यद्यपि वामनः ग्रामान्तरं प्रति प्रस्थितः, तथापि महत्या वृष्ट्या गन्तुम् असमर्थः सोमस्य गृहम् आश्रितवान् । सोमः अपि तस्य सत्कारं कृत्वा भोजनं कारितवान् । किन्तु सः अतिथिना सह भोजनं न कृतवान् । "श्रीमन् ! भवान् उदारः । एतादृशं सत्कारम् आतिथ्यं च कुत्रापि अहं न अनुभूतवान् । किन्तु भवान् किमर्थं मया सह भोजनं न कृतवान् इत्येव मम खेदः" इति वामनः उक्तवान् ।

एतत् श्रुत्वा सोमः स्वीयां सर्वां कथां सविस्तारम् उक्तवान् । तत् श्रुत्वा "यद्यपि भवतः एषा अवस्था अस्ति, तथापि औषधसेवनेन भवान् कृशः भवत्येव । किन्तु मम दुरवस्थां पश्यतु । माम् उन्नतशरीरिणं कर्तुं किमपि औषधं नास्ति एव । सर्वे अपि मम वामनशरीरं दृष्ट्वा हसन्ति । अतः एतदर्थं किं वा कर्तुं शक्यम् ?" इति वामनः पृष्टवान् । "सत्यं, मम अपेक्षया भवतः स्थितिः अतीव शोचनीया" इति सोमः अनुकम्पया उक्तवान् ।

एतत् श्रुत्वा वामनः हसन् उक्तवान्—"मम स्थितिः न शोचनीया । किन्तु भवतः स्थितिः एव परमशोचनीया" इति । "एतत् कथं भोः ?" इति अत्याश्चर्येण सोमः पृष्टवान् ।

"यद्यपि भवान् स्थूलः, तथापि तेन का हानिः? किं दुःखम्? सर्वमपि कार्यं सुखेनैव भवान् करोति । किन्तु जनाः हसन्ति इति भवान् कृशः भवितुं परिश्रमं वहति । एवं च भवन्तं



दयतः पूर्वमेव धावनं कर्तव्यम्' इति । अनन्तरं सोमः तथैव कृतवान् । तदा द्वित्राः जनाः मार्गे दृश्यन्ते स्म । हासं कुर्वतां सङ्ख्या तु न्यूना अभवत्, किन्तु उषःकाले शय्यां त्यक्त्वा उत्थातुं सोमस्य बहुसङ्कटम् अभवत् । यतः उषःकाले सुमधुरां निद्रां त्यक्तुं तस्य मनः न इच्छति स्म ।

अतः पुनः वैद्यस्य समीपं गत्वा सोमः प्रार्थितवान् —'श्रीमन् ! अहं धावितुं न समर्थः । इतोऽपि सरलम् उपायं कृपया सूचयतु' इति । वैद्यः उक्तवान्—"बहवः उपायाः सन्ति । एषः एकः सरलः उपायः—प्रतिदिनम् एकचषकं क्षीरं तथा एकचषकं फलरसं पिबतु । अपि च निम्बुकफलमिश्रस्य तक्रान्नस्य भोजनं स्वीकरोतु । एवं परिमिताहारेण मासद्वये एव भवान् कृशः भविष्यति" इति ।

वैद्येन यथा उक्तं तथा सोमः दिनद्वयं कृतवान् । बहु आयासेन सः श्रान्तः अभवत् । खाद्यार्थं जिह्वा स्रवति स्म । यद्यपि शरीरं किञ्चिदिव कृशम् अभवत् । तथापि जिह्वाचापल्यं निरोद्धुम् असमर्थः सोमः तृतीये दिने एव बहु भुक्तवान् । पुनः तस्य शरीरं पूर्ववत् स्थूलम् अभवत् ।

पुनः वैद्यस्य समीपं गत्वा सोमः उक्तवान् । "भवता यथा उक्तं तथैव दिनद्वयं मिताहारं सेवितवान् । शरीरमपि किञ्चित् कृशम् अभवत् । किन्तु तृतीये दिने बुभुक्षां सोढुम् असमर्थः बहु भुक्तवान् । पुनः शरीरं स्थूलम् अभवत् । एवं चेत् कथम् अहं सुखेन जीवामि? कृशः भवितुं तथा कृशीभूतं शरीरं रक्षितुं च कति दिनानि मिताहारः सेवनीयः ? कृपया सूचयतु" इति ।

"मिताहारः कति दिनानि ? इति ? अत्र शृणोतु, यदा भवान् कृशः भवति अनन्तरम् अपि यावज्जीवं भवता मिताहारः एव सेवनीयः । यदा यथापूर्वं भोजनं करोति, तदा भवतः शरीरं स्थूलं भवेत् एव । भवतः शरीरस्य एषः स्वभावः" इति वैद्यः उक्तवान् ।

"यावज्जीवं मिताहारः चेत् अल्पकाले एव मम मरणं भवेत् । अतः मिताहारः दुःसाध्यः एव । अतः उपायान्तरं कृपया सूचयतु" इति सोमः प्रार्थितवान् ।

"मम समीपे औषधं तु अस्ति । तत् औषधं स्वीकरोतु । मिताहारस्य क्लेशः नास्ति" इति उक्त्वा वैद्यः दश घुटिकाः दत्तवान् ।



# स्थूलः वामनः च

कश्चित् ग्रामः । तत्र रामिलः नाम कश्चित् श्रेष्ठी वसति स्म । तस्य पत्नी जीवम्मा इति । तयोः दम्पत्योः सोमः नाम एकः एव पुत्रः । मातापित्रोः परमप्रीतिपात्रं सोमः । सः यत् यत् इच्छति तत् सर्वं तस्य कृते दातुं रामिलस्य प्रयत्नः । जीवम्मा अपि अस्मिन् विषये पुत्रपक्षपातिनी एव आसीत् । अतः सोमस्य बुद्धेः अपेक्षया देहः सम्यक् वर्धितः । गच्छता कालेन सोमः तरुणः अभवत् । तस्य वयः पञ्चविंशतिवर्षाणि । तस्मिन् वयसि तस्य शरीरं बहुस्थूलम् अभवत् । प्रतिदिनं स्थूलता वर्धते स्म । दिने दिने तस्य शरीरं तथा वर्धितं यत् दृष्ट्वा तस्य अग्रे एव सर्वे हसन्ति स्म । 'आह, गजराजविराजितमन्दगतिः' इति एकः तं दृष्ट्वा उपहसति । अन्यः 'अये कथं पर्वतः अपि इतस्ततः चलति' इति परिहसति । उपहासवचनानि शृणोति तदा बहु खिन्नः भवति । तानि एव निन्दावाक्यानि तस्य कर्णयोः पुनः पुनः निनदन्ति । कदाचित् सः बहुव्यग्रः अभवत् ।

अनन्तरं सोमः वैद्यं दृष्ट्वा पृष्टवान्— "मम शरीरं कथं कृशं भवेत् ? उपायं कथयतु" इति । "क्रोशयुगं प्रतिदिनं धावतु । मध्ये कुत्रापि न तिष्ठतु । एकस्मिन् मासे एव भवान् कृशः भविष्यति" इति वैद्यः उक्तवान् ।

क्रोशयुगं धावनं नाम सार्वजनिकमार्गे एव करणीयम् । तथापि सोमः तस्मिन् मार्गे एव धावितुम् आरब्धवान् । मार्गे बहवः जनाः अभिमुखं मिलन्ति स्म । सोमस्य धावनं दृष्ट्वा केचित् जनाः हसितवन्तः । हसतां मध्ये एकः तु स्वकुतूहलं निरोद्धुम् अशक्तः सोमं पृष्टवान् एव—"किमर्थं धावति?" इति । अपि च सोमेन सह धावन् एव धावनकारणम् अपि ज्ञातवान् । परस्मिन् दिने अपि सोमः धावितुम् आरब्धवान् । मार्गे ह्यस्तन-अपेक्षया अद्य अधिकाः जनाः आसन् । मम धावनं द्रष्टुम् एव एते स्थितवन्तः" इति सोमः भावितवान् ।

अतः लज्जितः सोमः चिन्तितवान् —'सूर्यो-

दृष्ट्वा हसतां कृते एव भवान् परिश्रमं वहति। एषा परमशोचनीया स्थितिः भवतः एव, न मम "इति वामनः उक्तवान्। "एवं तर्हि भवन्तं दृष्ट्वा कश्चित् हसति चेत् भवान् किं सङ्कटं न अनुभवति ?" इति पुनः सोमः पृष्टवान्।

"श्रीमन्! अहम् एकं प्रश्नं पृच्छामि। निर्दाक्षिण्यं कथयतु। मम आकृतिं दृष्ट्वा यथा अन्ये हसन्ति तथैव भवान् अपि हसति किल ? मम पुरतः न हसति इति तु अन्यत्" इति उक्त्वा वामनः तस्य उत्तरं निरीक्षितवान्।

सोमः तु तस्य वचनं सत्यम् एव इति अङ्गीकृतवान्। वामनः पृष्टवान्—"भवन्तं दृष्ट्वा हसतां मध्ये अहमपि एकः इत्यपि सत्यं किल ?"

"तदपि सत्यमेव। भवतः आकृतिं दृष्ट्वा अहं हसामि। मम आकृतिं दृष्ट्वा भवान् हसति। एषः मनुष्यस्य स्वभावः" इति सोमः उक्तवान्।

"अत्रैव यथार्थः विषयः अस्ति। अत्र मम वचनं शृणोतु। द्वयोरपि समस्या एका एव। यः कोऽपि भवन्तं दृष्ट्वा यदि हसति तदा भवन्तं माम् इति भावयतु। मां दृष्ट्वा कश्चित् हसति चेत् भवानेव इति अहं भावयामि। तदा का व्यथा ?" इति वामनः सूचनां दत्तवान्।

"वामनस्य वचने निश्चयेन सत्यांशः प्रतीयते एव। मम आरोग्यं समीचीनम् एव अस्ति। यः कोऽपि हसति इति मम शरीरं किमर्थं वा क्लेशयामि ? आहारस्य पानीयस्य च इच्छा बलात्कारेण किमर्थं निरोधनीया ?" इति सोमः चिन्तितवान्।

अनन्तरं वामनं नमस्कृत्य उक्तवान् "श्रीमन्! भवतः आतिथ्यं कृत्वा अहं धन्यः। भवान् महाज्ञानी इव मम कृते उपदेशं कृतवान्। इतः परं मम समस्या एव नास्ति" इति।

अनन्तरं यद्यपि सोमस्य स्थूलता क्षीणतां न गता, तथापि तं दृष्ट्वा हसतां सङ्ख्या क्षीणतां गता। उपहासपात्रस्यैव यदि मनसि खेदः न भवति तर्हि हसताम् अपि हसितुम् इच्छा न भवति। यदि कश्चित् हसति चेत् तस्यैव मनः खिन्नं भवति।



सौन्दर्य परितः स्फुरति स्म । राजा तु अनेन आकृष्टः । किन्तु स्वस्य आज्ञातः तां विमोचयितुं सः समर्थः न अभवत् । यतो हि 'अस्याः विषये राजा पक्षपातं प्रदर्शितवान्' इति केचन आक्षेपं कुर्युः इति । अतः तस्यां रात्रौ पश्चात्तापेन दग्धः सः राजा निद्रामेव न कृतवान् ।

परस्मिन् दिने एव राजा तस्याः वृत्तान्तं ज्ञातुं गुप्तचरान् आत्मीयान् च नियोजितवान् । "सा न केवलं सुन्दरी, दानशीला, शीलवती, दयाशा लिनी, उदारस्वभावा च" इति सर्वे राज्ञे निवेदितवन्तः ।

"अनपराधिन्याः, उदारायाः च अस्याः दुर्गतिः अहमेव कारणम्" इति राजा खिन्नः व्याकुलः च अभवत् । तत् प्रायश्चित्तरूपेण अविवाहितः सः राजा सप्ताहाभ्यन्तरे एव तां परिणीतवान् ।

दास्या सह राज्ञः विवाहः राजसहोदर्याः उग्रकोपस्य कारणम् अभवत् ।

दासी इदानीं राज्ञी संवृत्ता । तथापि राजसहोदर्याः विषये उदारा सा प्रतीकारबुद्धिं न प्रदर्शितवती । प्रत्युत तां सगौरवं सस्नेहं च आदृतवती । गतवति काले, राज्ञी पुत्रम् एकं प्रसूतवती । राज्ञ्याः पुत्रजननतः राजसहोदर्याः द्वेषः परां कोटिं गतः ।

एकदा राजा कार्यभारेण राजधानीं विहाय देशान्तरं गतवान् । एतादृशं समयमेव राजसहोदरी निरीक्षमाणा आसीत् । "एषा राज्ञी मायाविनी । अतः एव मायाविद्यया राजानं स्ववशं कृतवती । अन्यथा कथं वा राजा दासीं



छिन्नहस्तां परिणयेत् ?" इति किंवदन्ती तया जनिता । तस्याः सखीभिः च अन्तःपुरे राजभवने च प्रसारिता ।

वृद्धा राजमाता । तस्याः मायाविनीनां विषये सदा भीतिः । अपि च मम वधूः छिन्नहस्ता दासी च इति सा अवमानं मन्यमाना आसीत् । इदानीं तु वधूं मायाविनीं श्रुत्वा भीता अभवत् । तत्क्षणमेव रक्षकान् उद्दिश्य "एतां राज्ञीं पुत्रेण सह कुत्रचित् मरुभूमौ परित्यजन्तु" इति आज्ञां कृतवती । रक्षकाः राज्ञीं पुत्रेण सह नीत्वा मरुभूमौ परित्यज्य प्रतिनिवृत्ताः ।

मध्याह्नसमयः । राज्ञी पिपासया श्रान्ता । अतः शिशुं कक्षेण आदाय जलार्थं किञ्चित् अटितवती । समीपे काचित् नदी वहति स्म । सा शीघ्रमेव नदीतीरं प्राप्तवती । एकस्मिन् करे



किमर्थं पतितः भवान् ? किं वा आपतितम् ?" इति ।

सः वृद्धः निःशक्तः आसीत् । तस्य जिह्वा एव वक्तुं न प्रसरति स्म । अतः महता आयासेन उक्तवान्— "वत्से । अहं यात्रार्थी । तीर्थानि पुण्यक्षेत्राणि च अटामि । चोराः मदीयं सर्वं धनम् अपहृतवन्तः । अनन्तरम् अनारोग्येण ज्वरपीडितः अभवम् । इदानीं तु आरोग्येण अस्मि । किन्तु खादितुं किमपि न लब्धम् । बुभुक्षया प्राणाः निर्गच्छन्ति इव प्रतिभाति" इति ।

एतत् श्रुत्वा दास्याः हृदयम् अनुकम्पया आर्द्रं जातम् । सा रोटिकाद्वयमपि वृद्धस्य कृते दातुं हस्तं प्रसारितवती ।

"मा ददातु," तामेव दासीम् अनुवर्तमाना राज्ञः सहोदरी उच्चैः उक्तवती ।

दासी प्रतिनिवृत्य दृष्टवती । राज्ञः सहोदरी धावन्ती आगत्य कोपेन उक्तवती— "रे ! किं भवत्याः ज्ञानं नष्टम् ? 'कस्यापि कृते भिक्षां न कोऽपि दद्यात्' इति उग्रा राजाज्ञा न ज्ञाता ?" इति ।

"राजाज्ञां जानामि एव । राज्ये भिक्षाटनस्य निर्मूलनार्थं राज्ञा प्रयत्नः कृतः । सः श्लाघ्यः प्रशस्तः च । यतः भिक्षुकेषु चोराः सन्ति । अलसाः अपि सन्ति । एषः तु वृद्धः, न चोरः न वा अलसः । पुण्यस्थलानां दर्शनार्थं आगतः यात्रार्थी । चोरगणां कारणेन निर्धनः अभवत् । अशक्त्या गन्तुमपि न शक्तः । बुभुक्षया म्रियमाणः इव अस्ति । अतः मम अवरोधनं मा करोतु ।" इत्युक्त्वा रोटिकाद्वयमपि वृद्धस्य कृते दत्तवती । जलं च पायितवती ।

"क्षुद्रेण व्याजेन राजाज्ञां, मम आज्ञां च किं भवती धिक्करोति ? उग्रं राजदण्डम् अनुभवतु" इत्युक्त्वा सरोषं राजसहोदरी राजभवनं गतवती । दास्याः रोटिकादानविषयम् अपि राज्ञे निवेदितवती ।

"किम् ? राजाज्ञां दासी उल्लङ्घितवती ? तस्याः हस्तः सद्य एव छिद्यताम्" इति भटान् राजा आज्ञापितवान् । भटाश्च तां दासीं नीत्वा तस्याः हस्तच्छेदं कृतवन्तः ।

भटाः यदा दासीं हस्तच्छेदनार्थं नीतवन्तः तदा राजा तस्याः मुखं दृष्टवान् । मुखे न भीतिः, न दीनभावः, न वा म्लानलेशः । अपि तु अनुपमं



# सफलः त्यागः

इराक् देशे लघुराज्यम् आसीत् । तत् राज्यं कश्चित् राजा पालयति स्म । सः तरुणः आसीत् । केनापि कारणेन अविवाहितः च । तस्मिन् राज्ये बहु भिक्षुकाः आसन् । तेषु दृढकायाः पुरुषाः सबलाः स्त्रियः च आसन् । एकदा भिक्षुकाणां विषये महाराजस्य जुगुप्सा सञ्जाता । अतः राजा चिन्तितवान्— "एते भिक्षुकाः अपस्वरेण रटन्तः जनान् पीडयन्ति । देवमन्दिरे उद्याने इति यत्र कुत्रापि गत्वा तत्परिसरं मलिनयन्ति । केचन सशक्ताः अपि कार्यं कर्तुम् अलसाः भूत्वा भिक्षावृत्तिम् अवलम्बन्ते । अतः मम राज्ये भिक्षुकाः "एव न भवेयुः" इति ।

तत्क्षणमेव राजा 'भिक्षुकनिर्मूलनशासनं' कार्यपथे आनीतवान् । स्वराज्ये प्रतिग्रामम् अधिकारिणः प्रेषितवान् । ते अधिकारिणः कार्यं कर्तुं समर्थानां कृते उद्योगं दत्तवन्तः । वार्धक्येन अङ्गवैकल्येन च सर्वथा कार्यं कर्तुम् अशक्तानां कृते भोजनार्थं धर्मशालाः स्थापितवन्तः ।

एवं राज्ञा सुव्यवस्था कृता । तथापि केचित् धर्मशालातः रहसि प्रस्थाय भिक्षाम् अटन्ति स्म । क्रुद्धः राजा आज्ञापितवान्— "कस्यापि कृते भिक्षां न कोऽपि दद्यात् । यः अत्र भिक्षां ददाति तस्य हस्तः छिद्यते । एषा राजाज्ञा अनुल्लङ्घनीया" इति । एतत् राजशासनं सडिण्डिमघोषं ग्रामे ग्रामे प्रसारितम् ।

कालःअतीतः । एकस्मिन् दिने राज्ञः सहोदरी मातुलं दृष्ट्वा प्रत्यागच्छन्ती आसीत् ? उद्यानं दृष्टम् । ताः तिस्रः अपि उद्यानं प्रविश्य वृक्षस्य छायायां विश्रमितुम् उपविष्टाः । तदा भोजन समयः आसीत् । तदा राज्ञः सहोदरी एकैकस्याः अपि दास्याः कृते रोटिकाद्वयं दत्तवती । तयोः एका दासी जलान्वेषणं कुर्वती किञ्चित् दूरे एकं सरोवरं दृष्टवती । तत्र तीरे कश्चित् वृद्धः पतितः आसीत् । सः अशक्त्या उत्थातुम् अपि असमर्थः आसीत् ।

दासी तस्य समीपं गत्वा पृष्टवती— "तात !

शिशुः अस्ति । अपरः करः नास्ति । अतः हस्तेन जलम् आदातुम् असमर्था साक्षात् मुखेन जलं पातुम् अग्रे नतवती ।

तदा हस्ते स्थितः शिशुः अकस्मादेव प्रवाहे पतितः । शीघ्रगामिना प्रवाहेण सह शिशुः अपि गतः । प्रवाहे गच्छन्तं शिशुं दृष्ट्वा तस्याः हृदयं भिन्नमिव अभवत् । शोकोपहता सा आक्रोशन्ती अधः पतिता ।

सूर्यः अस्तङ्गतः । चन्द्रः उदितः । सर्वत्र चन्द्रिका प्रसृता । दुःखार्ता राज्ञी तन्द्रावस्थायाम् आसीत् । कश्चित् मधुरस्वरेण पृष्टवान्—"राज्ञि । हस्तात् प्रवाहे पतितं शिशुं किं भवती इच्छति ?"

"कुत्र मम पुत्रः ? कुत्र ? ददातु, शीघ्रं ददातु" इति वदन्ती राज्ञी नेत्रे उन्मील्य हस्तं प्रसारितवती । परितः अपि चन्द्रिका । चन्द्रिकायां काचन अस्पष्टा आकृतिः । सा आकृतिः शिशुं राज्ञ्याः कृते दत्तवती ।

क्षणद्वयम् अतीतम् । अपरः मधुरस्वरः अपृच्छत् । "राज्ञि ! नष्टं हस्तं किं भवती इच्छति ?"

"यदि अपरः हस्तः स्यात् तदा मम शिशुः प्रवाहे किमर्थं पतितः स्यात् ? अवश्यं मदीयं हस्तम् इच्छामि । अनुगृह्णातु ।" इति राज्ञी दीनस्वरेण याचितवती ।

अनुक्षणमेव तस्याः छिन्नः हस्तः शनैः शनैः वर्धितः । पूर्वावस्थां च प्राप्तः । आशिषं कुर्वता आकृतिद्वयेनापि उक्तं—राज्ञि ! भवती अत्रैव तिष्ठतु । भवत्याः पतिः महाराजः अनेन मार्गेणैव प्रत्यागच्छति । भवतीं दृष्ट्वा बहु हृष्टः भवति ।

राज्ञी अत्यादरेण विनयेन च पृष्टवती—"कौ भवन्तौ? अनाथे मयि किं निमित्तः एषः अनुग्रहः? कथं वा कृतज्ञतां प्रकटीकरोमि ?" इति

'अम्ब ! भवत्याः त्यागस्य फलम् इदम् । त्यागः अद्य फलितः । तस्मिन् दिने म्रियमाणस्य वृषदस्य कृते रोटिकाद्वयं भवती दत्तवती । येन वृषदस्य प्राणाः रक्षिताः । तत् रोटिकाद्वयमेव आवाम् उभौ अपि" इत्युक्त्वा आकृतिद्वयमपि चन्द्रिकायां विलीनं गतम् ।





# विष्णुकथा

वालिनः मरणानन्तरं सुग्रीवः किष्किन्धायाः राजा अभवत् । सुग्रीवः वालिनः पुत्रस्य अङ्गदस्य यौवराज्याभिषेकं कृतवान् । अनन्तरं सुग्रीवः सर्वेषु राजकार्येषु युवराजम् एव नियोजितवान् । स्वयं सुखभोगेषु मग्नः सन् रामकार्यमेव विस्मृतवान् । रामः तस्य साहाय्यार्थं प्रतीक्षां करोति । पूर्वं प्रतिज्ञातं कार्यं कृतम् इति वार्ता प्रेषयति इति रामः चिन्तयन् तिष्ठति । किन्तु सुग्रीवेण कापि वार्ता न प्रेषिता । तथापि रामः प्रशान्तमनस्कः । पुनः कानिचन दिनानि प्रतिपालयति । तदा अपि सुग्रीवेण किमपि न कृतम् । तेन यथा उक्तं तथा न कृतम् । एवं वचनभ्रष्टं सुग्रीवं प्रति रामः अतीव क्रुद्धः भवति । 'स्वार्थी एषः सुग्रीवः । स्वकार्यं सफलं जातमिति अन्यस्य कृते प्रतिज्ञातमपि साहाय्यं कर्तुं विमुखः । मां वञ्चयितुं पश्यति वा एषः वानरः ? अस्तु, वाली येन मार्गेण गतः सः मार्गः सङ्कुचितः नास्ति । कृतघ्नम् एतं सुग्रीवमपि तेन एव मार्गेण प्रेषयामि' इति निश्चित्य रोषावेशेन रक्तनेत्रः कोदण्डेन सहितः उत्थितः । एवं क्रोधाविष्टं किष्किन्धां प्रति प्रस्थितं रामं दृष्ट्वा तस्य सेवायां सर्वदा निरतः लक्ष्मणः उक्तवान्— "आर्य, एतं वानराधमं नाशयितुं कियान् कालः अपेक्षितः ? कृतघ्नम् एतम् अहम् एव दण्डयामि । सुग्रीवसदृशं सत्यवचनात् भ्रष्टं भ्रातृभीतं धूर्तं हन्तुं रामबाणस्य आवश्यकता नास्ति । लक्ष्मणः एव तं यमालयं प्रेषयति । भवान् तिष्ठतु" इति वदन् क्रोधमूर्तिः इव लक्ष्मणः धनुष्टङ्कारं कुर्वन् किष्किन्धां प्रविष्टवान् । एवं कोपारुणितनेत्रं गम्भीरमुखं लक्ष्मणं दृष्ट्वा भीतः आञ्जनेयः सुग्रीवं रामकार्यं

अनन्तरं प्रतिदिनं स चरिष्णुः आगत्य तस्य वृक्षस्य अधः उपविशति स्म । मार्गे परिचितः यः कोऽपि गच्छति चेत् तम् अपि आहूय समीपे उपवेशयति स्म ।

किन्तु मङ्गलस्य कृते किञ्चिदपि अवकाशं न ददाति स्म ।

अन्ते सः एवं कर्तुम् आरब्धवान् । आवरणे, सोपाने, गृहे एवं वृक्षस्य छाया यत्र यत्र पतति तत्र सर्वत्र चरिष्णुः आगत्य उपविशति स्म । यत्र छाया प्रसरति तत्र सर्वत्र मम अधिकारः अस्ति इति सः वदति स्म ।

एतत् दृष्ट्वा मङ्गलः बहु कुपितः अभवत् । "रे ! मम गृहस्य आवरणस्य अन्तः अपि आगच्छति वा ? अत्र आगन्तुं भवतः अधिकारः नास्ति ।

"किमर्थं भोः ! विस्मृतं वा ? यत्र छाया प्रसरति तत्र मम अधिकारः अस्ति खलु ? मास्तु इति वक्तुं भवान् कः ? जनान् पृच्छतु मम अधिकारः अस्ति वा न वा ? इति" ।

मङ्गलः "स्वयं कृतः अपराधः । किं करोमि" ? इति तूष्णीम् अभवत् ।

एकस्मिन् दिने मङ्गलस्य गृहे उत्सवः आसीत् । सर्वे बान्धवाः परिचिताः आगतवन्तः । मध्याह्ने भोजनस्य समयः । सर्वे भोजनार्थम् उपविष्टवन्तः । मङ्गलस्य गृहस्य आवरणे अपि वृक्षस्य छाया प्रसृता आसीत् । तदा सः चरिष्णुः आगत्य साक्षात् गृहस्य अन्तः एव उपविष्टवान् । अतिथयः सर्वे आश्चर्यचकिताः । कः एषः ? आह्वानं विना आगतवान् ? मध्ये एव उपविष्टवान् इति परस्परं विचारं कृतवन्तः ।

सः चरिष्णुः "अहम् अस्य वृक्षस्य सम्पूर्णां छायां क्रीतवान् । भवतां कृते अपि मम अनुमतिं विना अत्र उपवेष्टुम् अवकाशः नास्ति" इति उक्तवान् ।

वृक्षस्य छायायाः विक्रयणविचारं श्रुत्वा सर्वे बान्धवाः बहु हसितवन्तः । अनेन प्रसङ्गेन मङ्गलस्य बहु अपमाननम् अभवत् ।

अनन्तरं लज्जितः मङ्गलः केषुचित् दिनेषु एव स्वग्रामं त्यक्त्वा, सपरिवारम् अन्यं ग्रामं गतवान् ।





# वृक्षस्य छाया

पुरा मङ्गलः नामकः कश्चित् आसीत् । तस्य गृहस्य पुरतः एकः महान् सालकवृक्षः आसीत् । वृक्षः पर्णपरिपूर्णः आसीत् । ग्रीष्मकाले वृक्षस्य छाया बहु विशालतया प्रसरति स्म । मङ्गलः प्रतिदिनं वृक्षस्य अधः उपविश्य छायासुखम् अनुभवति स्म ।

एकस्मिन् दिने सूर्यः प्रखरतया ज्वलति स्म । सर्वत्र महान् आतपः । तस्मिन् दिने मध्याह्ने भोजनं समाप्य तस्य वृक्षस्य छायायाम् उपविश्य विश्रान्तिं स्वीकर्तुम् आगतवान् । किन्तु तत्र पूर्वमेव कश्चित् आगत्य उपविष्टवान् आसीत् । सः एकः चरिष्णुः । सर्वदा विनाकारणम् अटनमेव तस्य कार्यम् ।

"भवान् अत्र किमर्थम् उपविष्टवान् । कः अनुमतिं दत्तवान्, उत्तिष्ठतु ! उत्तिष्ठतु ! इति वदन् मङ्गलः तम् उत्थापयितुं प्रयत्नं कृतवान् । "अहं किमर्थम् उत्तिष्ठामि ? किमर्थं कोपः ? महान् आतपः, अत्र छाया अतीव सान्द्रा अस्ति इति कृत्वा अत्र उपविष्टवान् । तावता का हानिः ?" इति सः पृष्टवान् ।

"बाढम् ! भवान् छायाम् इच्छति वा ? तत् न शक्यते । एषः मम वृक्षः । अहं बहुकालात् जलसेचनादिकं कृत्वा एनं वृक्षं वर्धितवान् । अत एव एतस्य वृक्षस्य छाया अपि मम एव" इति मङ्गलः उक्तवान् । तत् श्रुत्वा चरिष्णुः दुःखितः भवति । तथापि तस्य सङ्कुचितबुद्धिं दृष्ट्वा मनसि एव हसन् "एवं वा, तर्हि एवं कुर्मः । अस्य वृक्षस्य छायां मम कृते विक्रीणातु । अहं धनं ददामि" इति उक्तवान् ।

मङ्गलः एतत् अङ्गीकृतवान् । अनन्तरं बहु विचार्य मापनं कृत्वा तस्याः छायायाः मूल्यं 'एकशतं रुप्यकाणि देयानि' इति निश्चयः अभवत् । अन्ते सः एकशतं रुप्यकाणि केषाञ्चन प्रमुखानां पुरतः एव दत्वा तत् स्थलं क्रीतवान् ।

पञ्चविंशतिवर्षेभ्यः पूर्वं चन्दमामायां प्रकाशिता कथा ।



स्मारितवान् ।

सुग्रीवः शीघ्रमेव कार्यम् आरब्धवान् । सीताम् अन्वेष्टुं सर्वदिक्षु वानरान् प्रेषितवान् । अङ्गदः, आञ्जनेयः, जाम्बवः इत्यादयः दक्षिणदिशं प्रति प्रस्थिताः । तदा रामः स्वस्य अङ्गुलीयकम् आञ्जनेयस्य हस्ते दत्वा उक्तवान्- सीतायाः कृते एतत् अभिज्ञानरूपेण ददातु'' इति । ते सर्वे वानराः दक्षिणसमुद्रस्य तीरम् आगत्य किं करणीयम् इति अज्ञात्वा परस्परं सम्भाषणं कृतवन्तः— ''पक्षिराजः जटायुः उक्तवान् 'रावणः सीतां दक्षिणदिशं प्रति नीतवान्' इति । किन्तु कुत्र नीतवान् ? कुत्र तां स्थापितवान् ? इत्यादिकं किमपि न ज्ञातम् । कथं तत् जानीमः'' ? इति । तस्मिन् एव काले एतान् वानरान् खादितुं जटायुषः अग्रजः सम्पातिः मन्दम् आगच्छन् आसीत् । वानराणां मुखात् स्वस्य अनुजस्य नाम श्रुत्वा सः आश्चर्यचकितः अभवत् ।

पुरा एकदा सम्पातेः जटायुषः च स्पर्धा सञ्जाता- 'कः सूर्यमण्डलं प्रविशति ?' इति । उभौ अपि आकाशे उड्डयितुम् आरब्धवन्तौ । किन्तु जटायुः असमर्थः भूत्वा प्रतिनिवृत्तः ।

सम्पातिः तु इतोऽपि उपरि गतवान् । तदा तस्य पक्षद्वयम् अपि दग्धम् । सः दक्षिण-समुद्रतीरे पतितवान् । तत्र प्राप्तान् प्राणिनः खादन् सः जीवति स्म ।

सम्पातिः वानरमुखात् सर्वं वृत्तान्तं ज्ञातवान् । प्रीतः सः अङ्गदं स्वस्कन्धे आरोप्य उत्थितवान् । दूरे समुद्रस्य अनन्तरं दृश्यमानं लङ्कापुरं तस्य कृते प्रदर्श्य उक्तवान्- 'सीता तत्र अस्ति' इति ।

वस्तुतः आञ्जनेयः समुद्रोल्लङ्घने समर्थः आसीत् । किन्तु सः स्वसामर्थ्यम् इदानीं न जानाति । आञ्जनेयः बाल्ये ऋषीन् बहुपीडयति स्म । तदा ते तं शप्तवन्तः- भवतः शक्तिसामर्थ्यं विस्मृतं भवतु इति । जाम्बवः तत् स्मारयन् उक्तवान्- 'भोः आञ्जनेय । रामकार्यं कर्तुं भवान् एव समर्थः । अतः सिद्धो भवतु' इति ।

तदा आञ्जनेयः मनसि रामध्यानं कृतवान् । महावेगेन आकाशे उत्प्लुतवान् । एवम् आकाशमार्गे सः लङ्घमानः आसीत् । तदा देवाः तस्य शक्तिपरीक्षार्थं सुरसां तत्र प्रेषितवन्तः ।

विवेकशालिनी भवतु" इति ।

सीता तृणमन्तरतः कृत्वा उक्तवती— "भोः रावण ! भवतः प्रगल्भवचनैः बल-दर्पैः वा अहं भीता भवामि इति मा चिन्तयतु । भवान् महा धूर्तः ! रामः भवन्तं यथा-योग्यं दण्डयति एव । असम्बद्धं मा प्रलपतु । रामः अत्र आगत्य भवन्तं मारयति ।

भवतः मरणकालः सन्निहितः अस्ति । तथाऽपि यदि जीवितुम् इच्छति तर्हि मां रामस्य कृते प्रत्यर्पयतु" इति ।

सीतायाः वचनं श्रुत्वा रावणः बहु क्रोधाविष्टः अभवत् । सः खड्गम् उद्यम्य उक्तवान्- 'भवतीम् इदानीम् एव मारयामि' इति ।

"मां मारयितुं भवान् न शक्नोति । भवान् एवं मां भाययति चेत् अहं भीता भवामि इति चिन्तयति किम्- ? रावणस्य वैभवं दृष्ट्वा रामस्य पत्नी कदापि व्यामुग्धा न भवति । भवतः वशवर्तिनी न भवति !"

"किमर्थं वशवर्तिनी न भवति ? तथा भवेदेव । तदा एव शूरस्य मम तृप्तिः, शान्तिः !"

"भवान् शूरः वा ? धूर्त ! यदि भवान् वीरः अभविष्यत् तर्हि युद्धे रामं विजित्य माम् आनेष्यत् । भवान् कपटी । रामः भवन्तं मारयत्येव । मा विस्मरतु ।"

रावणः रोषेण ततः प्रस्थितवान् । मण्डोदरी तस्य सान्त्वनं कुर्वती तम् अन्यत्र नीतवती ।

अनन्तरं राक्षसस्त्रीणां निद्रासमये आञ्जनेयः



वृक्षतः अवतीर्णवान् । सीतायाः सविधे स्व-परिचयम् उक्तवान् । रामेण दत्तम् अङ्गुलीयकं तस्याः कृते समर्पितवान् । आञ्जनेयः सीतायाः कृते विश्वरूपं प्रदर्शयन् उक्तवान्— "भवती मम स्कन्धे उपविशतु । अहं भवतीं रामसमीपं नयामि" इति ।

"किन्तु, आञ्जनेय ! सः समीचीनः क्रमः न । रामः रावणं मारयित्वा मां नयतु । तावत्पर्यन्तं शोकतप्ता सीता अशोकवने एव भविष्यति । एतं विषयं रामस्य कृते सूचयतु ।" इति उक्त्वा सीता रामस्य कृते दातुं स्वचूडामणिं आञ्जनेयस्य हस्ते दत्तवती ।

अहं लङ्काम् आगतवान् इति विषयं राक्षसाः जानीयुः इति आञ्जनेयः चिन्तितवान् अतः सः



लङ्किणी भूमौ पतितवती ।

महता प्रयासेन सा शनैः उत्थितवती । आञ्जनेयं नमस्कृत्य उक्तवती— "जयशील ! ब्रह्मा माम् उक्तवान् आसीत्- 'यदा भवती एवं पतति तदा लङ्कायाः विनाशकालः' इति । शापवशात् अहम् एवं क्षुद्रदेवता भूत्वा लङ्कानगरं रक्षन्ती अस्मि । इदानीम् अहं गच्छामि । भवान् अपि गन्तुं शक्नोति' इति । एवम् उक्त्वा सा गन्धर्वस्त्री भूत्वा आकाशे अन्तर्हिता अभवत् ।

आञ्जनेयः लङ्कानगरं प्रविष्टवान् । नगरे मणिदीपैः प्रकाश्यमानानि उन्नतसौधानि आसन् । एतादृश-लङ्कानगरस्य सौन्दर्यं वैभवं च दृष्ट्वा तस्य आश्चर्यम् अभवत् । किन्तु तत्र सीता कुत्र अस्ति इति सः अन्विष्यति ?

आञ्जनेयः सूक्ष्मरूपेण लङ्कानगरे सर्वत्र सीताम् अन्विष्टवान् । रावणस्य अन्तःपुरं प्रविष्टवान् । तत्र मण्डोदरीं दृष्ट्वा प्रथमम् 'एषा एव सीता' इति चिन्तितवान् । अनन्तरक्षणे वस्तुस्थितिं ज्ञातवान् ।

यत्र कुत्रापि सीता न दृष्टा । पुनः ताम् अन्विष्यन् अशोकवनं गतवान् । तत्र सः वृक्षतः वृक्षम् उत्प्लवते स्म । तदा शान्तस्वरेण उच्चार्यमाणं रामनाम शृतवान् ।

तत्र एकं चन्द्रकान्तशिलनिर्मितं मण्डपम् आसीत् । सीता तत्र उपविश्य रामध्यानं करोति स्म । तस्याः नेत्रतः अश्रुधारा प्रवहति स्म । मण्डपं परितः विविधानि आयुधानि धरन्त्यः राक्षसस्त्रियः रक्षणं कुर्वन्ति स्म ।

मण्डपस्य पार्श्वे एकः शिंशपावृक्षः आसीत् । आञ्जनेयः तदुपरि उपविश्य पश्यन् आसीत् ।

सीता मण्डपतः उत्थितवती । पार्श्वे विद्यमानस्य अशोकवृक्षस्य अधः आगत्य उपविष्टवती ।

तदा रावणः साटोपं अशोकवनम् आगतवान् । सुन्दर्यः देव-गन्धर्व- नाग-यक्ष-राक्षस-मानवस्त्रियः तस्य वैभवं श्लाघमानाः आगतवत्यः ।

रावणः अशोकवृक्षस्य समीपम् आगतवान् । सीतयाः पुरतः स्थित्वा उक्तवान्— "भोः, इदानीं वा मम वचनं श्रृणोतु । क्षुद्रमानवे रामे मा विश्वसितु । रामः अत्र लङ्कानगरम् आगन्तुं कदापि न शक्नोति । किमर्थं वृथा चिन्ता ?

देवताख्री सुरसा भयङ्कराक्षसाकारं धृतवती । मुखं व्यादाय आञ्जनेयं गिलितुम् आगतवती । तां दृष्ट्वा आञ्जनेयः स्वशरीरं वर्धितवान् । सा अपि मुखं विशालं कृतवती । आञ्जनेयः इतोऽपि वर्धितः । सा अपि मुखम् इतोऽपि विशालं कृतवती । तदा आञ्जनेयः झटिति सूक्ष्मरूपं धृतवान् । सुरसायाः मुखं प्रविष्टवान् । तत्र स्वदेहं वर्धितवान् । तदा सुरसायाः शरीरं विदीर्णम् । आञ्जनेयः बहिः आगतवान् । सुरसा पुनः देवतारूपेण देवलोकं गतवती ।

लङ्घनसमये आञ्जनेयस्य छाया समुद्रे पतति स्म । राहोः माता सिंहिका नाम्नी राक्षसी तां छायां गृहीत्वा आक्रष्टुम् आरब्धवती । 'मां यः कोऽपि कर्षति' इति आञ्जनेयः ज्ञातवान् । अधः सिंहिकां दृष्टवान् । एकेनैव मुष्टिप्रहारेण तां मारितवान् ।

एवं सर्वान् अवरोधान् विजित्य आञ्जनेयः आकाशमार्गे गच्छति स्म । सुवर्चला इत्येका नागकन्यका मीनरूपं धृत्वा आश्चर्येण उपरि पश्यति स्म । तदा तस्याः मुखे आञ्जनेयस्य एकः स्वेदबिन्दुः पतितः । तेन सुवर्चला गर्भिणी अभवत् । सा एकं पुत्रं प्राप्तवती । सः पुत्रः एव अपारशक्तिशाली मत्स्यवल्लभः ।

पूर्वं सर्वेषां पर्वतानां पक्षाः आसन् । इन्द्रः वज्रायुधेन तेषां पक्षच्छेदं कृतवान् । तदा हिमवतः पुत्रः मैनाकः वायुसाहाय्येन समुद्रे निमग्नः ।

मैनाकः आञ्जनेयं दृष्टवान् । सः समुद्रतः उत्थाय प्रार्थितवान्— "भोः आञ्जनेय ! किञ्चित्कालं मम उपरि विश्रम्य अग्रे गच्छतु" इति ।



आञ्जनेयः तस्य वचनम् अङ्गीकृतवान् । किञ्चित्कालं मैनाकपर्वते स्थित्वा पुनः अग्रे गतवान् ।

आञ्जनेयः लङ्कां प्राप्तवान् । लङ्किणी नाम लङ्कादेवता सर्वदा नगरं रक्षति स्म । सा आञ्जनेयस्य आगमनं दृष्टवती । भीकराकारेण शूलं गृहीत्वा तं मारयितुम् आगतवती ।

आञ्जनेयः सूक्ष्मरूपेण लङ्काद्वारं लङ्घमानः आसीत् । लङ्किणी तं मक्षिकाम् इव स्वमुष्टिमध्ये गृहीतवती । तदा आञ्जनेयः तस्याः करतलं दष्टवान् । करतलतः रक्तं स्रोतुम् आरब्धम् । आञ्जनेयः शीघ्रं उत्प्लुत्य लङ्किण्याः वक्षस्थले मुष्टिप्रहारं कृतवान् । तेन मुष्टिप्रहारेण



सुन्दरस्य अशोकवनस्य ध्वंसं कृतवान् ।

तदा रावणः तं मारयितुम् अक्षकुमार-जम्बुमालि-इत्यादि राक्षसान् प्रेषितवान् । आञ्जनेयः तान् सर्वान् मारितवान् । तैः सह आगतान् सहस्रशः राक्षसभटान् अपि मारितवान् ।

अन्ते रावणस्य ज्येष्ठपुत्रः इन्द्रजित् युद्धार्थम् आगतवान् । सः आञ्जनेयस्य उपरि ब्रह्मास्त्रप्रयोगं कृतवान् । तदा आञ्जनेयः चिन्तितवान्— "इदं ब्रह्मणः अस्त्रम् । ब्रह्मा च पूजनीयः । अतः ब्रह्मास्त्रस्य तिरस्कारं न करोमि । किञ्चित्कालम् अनेन अस्त्रेण बद्धः भवामि । रावणस्य कृते कानिचन हितवाक्यानि च वदामि" इति । अनन्तरं भटाः तं रावणसभां नीतवन्तः ।

रावणः उन्नतसिंहासने उपविष्टवान् आसीत् । सः शृङ्खलाभिः बद्धम् आञ्जनेयं दृष्ट्वा उपहासं कृतवान् ।

झटिति आञ्जनेयः स्वशरीरं वर्धितवान् । तदा शृङ्खलाः भग्नाः । सः स्वलाङ्गूलम् अपि बहुदीर्घं वर्धितवान् । तत् वलयीकृत्य उन्नतसिंहासनवत् कृत्वा उपविष्टवान् ।

आञ्जनेयः उक्तवान् "भोः राक्षसराज ! रावण ! अहं श्रीरामस्य दूतः । रामः वानरभटैः सह अत्र आगत्य लङ्कानगरं नाशयति । अहं बहुबलशाली इति वृथा गर्वः मास्तु । दुर्बलाः पिपीलिकाः अपि सर्पं मारयितुं शक्नुवन्ति इति भवान् जानाति एव । अतः सीतां रामस्य कृते प्रत्यर्पयतु । क्षमां प्रार्थयतु" इति ।

तत् श्रुत्वा रावणः रोषाविष्टः अभवत् । सः आञ्जनेयं मारयितुं खड्गं गृहीतवान् । तदा विभीषणः रावणं उक्तवान्— "भोः एषः धर्मः न । दूतः न वध्यः"

"तर्हि एवं कुर्मः । स्व-लाङ्गूलविषये अस्य बहु गर्वः अस्ति । अतः अस्य लाङ्गूलं वस्त्रेण बद्ध्वा तैलं विलिप्य अग्निना ज्वालयन्तु"- इति रावणः आज्ञापितवान् ।

राक्षसभटाः लाङ्गूलस्य वस्त्रबन्धनं कर्तुम् आरब्धवन्तः । किन्तु लाङ्गूलं वर्धते एव ! पुनः पुनः तैलं लिप्तं चेदपि न पर्याप्तम् ! अन्ते यथाकथञ्चित् ज्वालितवन्तः ।

आञ्जनेयः पुनः शरीरं वर्धितवान् । सिंहनादं कुर्वन् उत्प्लवनं कृतवान् ।

ज्वलन् लाङ्गूलं परिवर्तयन् सः सौधतः

# आज्ञायाः परिवर्तनम्

लक्षणो नाम देशः । तत्र लावण्यं नाम प्रसिद्धं नगरम् । तत्र एकदा चोराः लुण्ठकाः च सूर्यास्तानन्तरं नगरमार्गे सञ्चरन्तः प्रजाजनान् पीडयन्तः तेषां धनानि बलात् अपहर्तुं च आरब्धवन्तः । अतः तादृशी परिस्थितिः उत्पन्ना यत् प्रदोषे अपि नगरमार्गे जनानां स्वेच्छया विहारः दुष्करः जातः । तत्र नगरपालकः विरूपाक्षो नाम । तस्य समीपे नगरवासिनः विषयं निवेदितवन्तः । परस्मिन् दिने एव सः आज्ञापितवान्— 'नगरमार्गे सूर्यास्तानन्तरं यः कोऽपि पर्यटनं न कुर्यात्' इति ।

अनया आज्ञया सायङ्कालानन्तरं नगर-जीवनमेव स्थगितं जातम् । वणिजां तु बहुनष्टम् अभवत् । अतः केचन नगरप्रमुखाः राजधानीं गत्वा महाराजाय सविस्तरं वृत्तान्तं निवेदितवन्तः ।

राजा मन्त्रिद्वारा पत्रमेकं नगरपालक-विरूपाक्षाय लेखितवान् "प्रजाजन निषेधाज्ञा युक्ता एव । यतः दुष्टाणां कारणेन प्रजानां क्लेशः मा भवतु इति हि आज्ञायाः सदुद्देशः । किन्तु न्यायः सदा निर्बाधः भवेत् । अन्यायः निर्बन्धे तिष्ठेत् । इदानीं तु निरपराधिषु प्रजाजनेषु निषेधाज्ञा विहिता । सा च आज्ञा अपराधिषु यथा अन्विता भवति तथा-परिवर्तनीया" इति ।

विरूपाक्षः इदं पत्रं पठित्वा आत्मनः दोषं विज्ञातवान् । ततः शीघ्रम् एव अपराधिनां ग्रहणार्थं समुचितां व्यवस्थां कृतवान् । तेन च नगरे सर्वत्र शान्तिः निर्भयता च पुनः उदिता ।



सौधम् उत्प्लुतवान् ।

समग्रं लङ्कानगरं ज्वालितवान् । किन्तु अग्नितापेन स तु न पीडितः । समग्रं लङ्कानगरं दग्धम् । रावणस्य अन्तःपुरसौधानि अपि दग्धानि । अनेके राक्षसाः मृताः । किन्तु विभीषणस्य भवनम् एकम् अवशिष्टम् ।

ततः आञ्जनेयः अशोकवनं गतवान् । सीता तत्र स्वस्था आसीत् । तां दृष्ट्वा ततः समुद्रसमीपम् आगतवान् । जले पतितवान् । अग्निः शान्तः । अनन्तरं पुनः समुद्रम् उल्लङ्घ्य वानराणां समीपम् आगतवान् । वानराः सर्वे तस्य प्रतीक्षां कुर्वन्ति स्म । तैः सह रामसमीपम् आगतवान् । रामस्य कृते चूडामणिं समर्पितवान् ।

चूडामणिं दृष्ट्वा रामस्य सीतायाः स्मरणम् पुनः पुनः अभवत् । आञ्जनेयः सीतायाः सर्वं वृत्तान्तं निवेदितवान् ।

रामः आञ्जनेयम् आलिङ्ग्य उक्तवान्— "भोः आञ्जनेय ! भवान् महत् कार्यं साधितवान् । भवादृशानां साहाय्यम् अस्ति चेत् यत्किमपि साधयितुं शक्यते । भवान् बहु बुद्धिशाली अस्ति । लोके भवान् कीर्तिशाली भवतु" इति ।

रामः कोदण्डं धनुः गृहीतवान् । रावण-वधार्थं सः सिद्धः अभवत् । विभीषणः रावणस्य अनुजः । सः रावणम् उक्तवान्— "रामेण सह युद्धं मास्तु । सीतां रामस्य कृते प्रत्यर्पयतु" इति ।

"भवतः दुराग्रहेण राक्षसकुलस्य मरणं भविष्यति । तथा न करणीयम्" इत्यपि सः उक्तवान् ।

किन्तु रावणः क्रुद्धः अभवत् । सः विभीषणं तर्जितवान्— "रे मूर्ख ! कथं भवान् राक्षसकुले उत्पन्नः ? भवान् कुलघातकः । शूर्पणखायाः अवमाननं दृष्ट्वा अपि भवतः लज्जा न भवति वा ? अधम ! इदानीम् एव लङ्कानगरतः बहिः गच्छतु । पुनः अत्रैव तिष्ठति चेत् भवन्तं चित्रहिंसया मारयामि" इति ।

विभीषणः स्व-सहचरैः सह लङ्कां परित्यज्य प्रस्थितवान् ।



# चित्र-शीर्षिका-स्पर्धा-पारितोषिकं ५० रूप्यकाणि !

विजिता शीर्षिका १९८४ जून मासस्य सञ्चिकायां प्रकटयिष्यते ।





* उपरितन चित्रद्वयं पश्यन्तु । तस्य युक्तां शीर्षिकाम् एकेन वाक्येन वा, परस्पर-सम्बन्धि-वाक्यद्वयेन वा विलिख्य प्रेषयन्तु । * एप्रिल-२० दिनाङ्कतः पूर्वं शीर्षिकाः अस्मान् प्राप्नुयुः । अनन्तरं आगताः शीर्षिकाः न परिशीलयिष्यन्ते । * शीर्षिकासु अस्माभिः निर्णीतस्य अत्युत्तमस्य शीर्षिका-युगलस्य ५० रूप्यात्मकं पारितोषिकम् । * शीर्षिकाः सम-पत्रे लेखनीयाः । तत्र अन्यः विषयः न लेखनीयः ।

[संस्कृतचन्दमामायाः सम्पादनसम्बन्धे सम्पर्कसङ्केतः—

चन्दमामा (संस्कृतम्)

७३/२ 'अक्षरम्' रंगराववार्गः

शङ्करपुरम्, बेङ्गलूरु-५६० ००४. (ग्राहकशुल्कं तु मद्रास् सङ्केतस्य कृते एव प्रेषणीयम्)]

## भवन्तः जानन्ति वा ? (उत्तराणि)

१. कैण्टी केन्टक्कीय प्रदेशस्य भूगर्भे शतमैल् परिमिता गुहा अस्ति । २. ग्रीन्लाण्ड् प्रदेशे तथा आर्कटिक् अण्टार्किटक् समुद्रयोः प्रान्तप्रदेशयोः सन्ति । ३. दक्षिण-आफ्रिकादेशस्य थेस्ला जलपातः । अस्य उन्नतिः २८१० फूट् । ४. दक्षिण-अमेरिका भूमध्य-रेखायाः समीपे स्थितः चिम्बोराको अग्निपर्वतः । ५. उदयपुरस्य ४८ कि. मि समीपे स्थितं जैसामण्ड् ।

Printed by B. V. REDDI at Prasad Process Private Ltd., and Published by B. VISWANATHA REDDI for CHANDAMAMA CHILDREN'S TRUST FUND (Prop. of Chandamama Publications) 188, Arcot Road, Madras-600 026 (India). Controlling Editor: NAGI REDDI.

श्री गुलाम् नबि आजाद् महोदयेन प्रेषिता वार्ता



उप मंत्री
सूचना और प्रसारण
भारत
DEPUTY MINISTER
INFORMATION & BROADCASTING
INDIA

New Delhi,

20th March 1984.

MESSAGE

I am glad to know that 'Chandamama' is bringing out Sanskrit edition also. Sanskrit being one of the oldest languages of our Country, Chandamama's efforts to promote this language, particularly among young generation is laudable.

I send my best wishes to 'Chandamama' and to its readers on this occasion.

( Ghulam Nabi Azad )



राज्य मन्त्री
सूचना और प्रसारण तथा संसदीय कार्य
भारत
MINISTER OF STATE FOR
INFORMATION & BROADCASTING
AND PARLIAMENTARY AFFAIRS
INDIA

New Delhi-110001
March 20, 1984

## श्रीमता भगत् महोदयेन प्रेषिता वार्ता

MESSAGE

I am glad to know that children's popular monthly magazine CHANDAMAMA is being published in Sanskrit also from April, 1984.

Children are the real wealth of the nation and for their education and entertainment through stories etc. good magazines are required. CHANDAMAMA has been fulfilling this need very effectively during the last four decades for which it deserves all praise.

I hope CHANDAMAMA's Sanskrit edition will be equally welcome and will help in popularising this ancient language of ours.

I wish CHANDAMAMA all success.

(H.K.L. BHAGAT)

# कठिण शब्दानाम् अर्थः

| | | | |
|---|---|---|---|
| ह्यस्तन | Yesterday's | व्रणः | Wound |
| तक्रान्नम् | Curd rice | प्रतीक्षा | Expectation |
| घुटिका | Tablet | करः | Tax |
| क्लेशः | Trouble | न्यूनीकर्तुं | To reduce |
| कूर्दमानः | Howling | पट्टवस्त्राणि | Silk clothes |
| चयनम् | Selection | आक्षेपः | Alligation |
| अवशिष्टः | Remaining | लुण्ठितवन्तः | Robbed |
| स्मयमानः | Smiling | रजत | Silver |
| अग्रजद्वयम् | Two elder brothers | कांस्यः | Bronze |
| अयोनिर्मित | Made of iron | भाण्डागारं | Godown |
| पूर्णस्वाम्यम् | Entire ownership | अवचित्य | Plucked |
| आस्फालयन् | Patting | खननम् | Digging |
| उपायनम् | Gift | निबिड | Thick |
| शुष्कध्वनिम् | Feeble voice | उज्जीवितः | Saved |
| लम्बमानाम् | Suspended | निखातुं | To burry |
| स्फीतः | Bursting | अटितुम् | Wandered |
| तुला | Ten grams | प्रतिवेशिनी | Neighbour (lady) |
| कुसीदः | Money lender | चरिष्णुः | Wanderer |
| श्लाघितवान् | Admired | आवरणम् | Compound |
| श्रथयित्वा | Having stopped | उड्डयितुम् | To fly |
| जामाता | Son-in-law | गिलितुम् | To swallow |
| जामिता जाता | Got bored | दंष्टवान् | He bit |
| विकीर्णानि | Spread | उत्प्लवते स्म | Was jumping |
| कर्तयित्वा | Having cut | अवतीर्णवान् | Got down |
| निश्शुल्कम् | Free of cost | लाङ्गूलम् | Tail |
| कण्डोलः | Basket | पिपीलिकाः | Ants |
| पृथक् | Separate | दुराग्रहः | Obstinacy |

